परिसरस्य मुख्यद्वारम्




निर्मीयमाणं शैक्षणिकं भवनम्



न्यायादिशास्त्रार्थमञ्जरी

देवप्रयागस्थ-श्रीरघुनाथकीर्तिपरिसरस्य न्यायविभगीयग्रन्थमालायां द्वितीयं कुसुमम्

ISBN : 978-81-936460-5-2

# न्यायादिशास्त्रार्थमञ्जरी

## देवप्रयागस्थ-श्रीरघुनाथकीर्तिपरिसरस्य न्यायविभगीयग्रन्थमालायां

### द्वितीयं कुसुमम्

2017-18 2018-19





**ISBN -** 978-81-936460-5-2

# न्यायादिशास्त्रार्थमञ्जरी

**देवप्रयागस्थ-श्रीरघुनाथकीर्तिपरिसरस्य न्यायविभागीय-ग्रन्थमालायां**

**द्वितीयं कुसुमम्**

**2017-18** **2018.19**

प्रधान-सम्पादकः

**प्रो. के. बी. सुब्बरायुडुः**

प्राचार्यः

सम्पादकः

**डॉ. आर. बालमुरुगः**

न्यायविभागाध्यक्षः

सम्पादने सहायकः

**श्रीकिशोरशर्मा**

न्यायविभागीय-अनुसन्धाता

**न्यायविभागः**

**केन्द्रिय-संस्कृत-विश्वविद्यालयः**

**श्री रघुनाथकीर्तिपरिसरः, देवप्रयागः, उत्तराखण्डः**



## शुभसन्देशः

**गङ्गा गङ्गेति यो ब्रूयात्, योजनानां शतैरपि।**
**मुच्यते सर्वपापेभ्यो, विष्णुलोकं स गच्छति।।**
**आपदामपहर्तारं दातारं सर्वसम्पदाम्।**
**लोकाभिरामं श्रीरामं भूयो भूयो नमाम्यहम्।।**

प्रातस्स्मरणीयस्य क्षेत्रदेवतायाः श्रीरघुनाथस्य अनुकम्पया परिसरोऽयं शैक्षणिककार्याणि समुचितरूपेण निर्वर्त्यतीति विजानन्त्येव विद्वांसः। अस्मिन् परिसरे प्रतिहायनं सर्वेषु विभागेषु छात्राणां शास्त्रविषयेषु ज्ञानवर्धनाय विशिष्टव्याख्यानमालाकार्यक्रमः विदुषां विचारविनिमयार्थं विचारसङ्गोष्ठ्यश्च समायोज्यन्ते। तत्क्रमे न्यायविभागे **पदवृत्तिविचारः** इत्यस्मिन् विषये संप्रवृत्तगोष्ठीविचारान् अन्यविचारांश्च समायोज्य शोधप्रबन्धसङ्कलनग्रन्थं प्रकाशयितुं न्यायविभागाध्यक्षः श्रीबालमुरुगः मया प्रेरितः आसीत्। सोऽपि तथैव श्रद्धया शोधप्रबन्ध पुस्तकसङ्कलने परिश्रमं कृतवान्। इदानीं अनेकविधविचारप्रबन्धान् सङ्गृह्य पुस्तकं प्रकाशयतीति विचिन्त्य महान्तं हर्षमवाप्नोमि। एतदर्थं न्यायविभागप्रमुखं अन्यान् पुस्तकप्रकाशने प्रयोजकान् विशेषतः साधुवचनैः अभिनन्दामि। इत्थं अनेकविधकार्याणि न्यायविभागपक्षतः प्रतिवर्षं समायान्तु इति मङ्गलकारकं श्रीरघुनाथं प्रार्थ्य विदुषामवलोकनाय पुस्तकमिदमुपस्थापयामि।

इत्थम्
परिसरनिदेशकः
**प्रो.के.बी.सुब्बरायुडुः**

# सम्पादकीयम्

राष्ट्रियसंस्कृतसंस्थानस्य नवजातश्रीरघुनाथकीर्तिपरिसरस्य न्यायविभागेन विविधविचारमकरन्दसंवलितं द्वितीयं कुसुमं विचारकुशलानां विदुषां निरीक्षणपथं समानीयते अधुना। परिसरीयसक्रियन्यायविभापक्षतः न्यायशास्त्रे "**पदवृत्तिविचारः**" इति शीर्षके समायोजितायाः राष्ट्रियविचारसङ्गोष्ठ्याः फलस्वरूपो वर्ततेऽयं शोधप्रबन्धः। अस्यां विचारगोष्ठ्यां विद्वद्भिः प्रस्तुतविचारविशेषान् सङ्कलय्य एवमन्येषां युवविदुषां तत्तच्छास्त्रीयशोधप्रबन्धान् सुयोग्यान् समायोज्य न्यायादिशास्त्रार्थमञ्जरी इति शोभननाम्ना सुविशेषशोधप्रबन्धं महता मुदेन प्रकाशयामि। परिसरीयन्यायविभागपक्षतः समायोजितविशिष्ट-व्याख्यानकार्यक्रमे राष्ट्रियसङ्गोष्ठ्याञ्च मुख्यातिथिरूपेण सन्निधाय श्रीवीरनारायण-पाण्डुरङ्गीवर्याः सरलशैल्या शब्दप्रमाणस्वरूपं सङ्गोपाङ्गं छात्रान् अवबोध्य सङ्केतविषयकप्रबन्धमपि प्रदत्तवन्तः इति अभिनन्दनपुरस्सरं तेभ्यः धन्यवादं प्रकाशयामि। नैकविलक्षणशास्त्रार्थसङ्ग्रहात्मकस्य शोधप्रबन्धस्यास्य कलेवरे राजमाननिबन्धेषु आद्यः वर्तते वरिष्ठनैयायिकानां श्रीमद् हरिदासभट्टाचार्याणां तमसः द्रव्यत्वनिराकरणप्रबन्धः। तर्कताण्डवकारादीनां तमसः द्रव्यत्वसाधनप्रक्रियां विमृश्य सर्वोपकारकप्रबन्धं प्राणयन्निति तेभ्यः हार्दं धन्यवादं प्रकटयामि।

सश्रद्धं छात्राध्यापनतत्परः श्रीमान् युवव्याकरणविद्वान् वैद्यसुब्रह्मण्यः व्याकरण-सिद्धान्तावगमनोपकारकाः नव्यन्याययुक्तीः सन्दर्भविशेषोद्धरणपुरस्सरं रमणीयप्रबन्धमुवेन न्यरूपयत्। वेदान्तविशारदः श्रीमहेश्वरन्महोदयः नैयायिकाभिमतेश्वरानुमानं साम्प्रदायिकवेदान्तदिशा विमृष्टवान्। एवं श्रीमनीषजुगरान् महोदयस्य आलङ्कारिकसम्मत-व्यञ्जनावृत्तिसंस्थापनपरः प्रबन्धः, युवप्रौढवैयाकरणस्य श्रीगणेश्वरझामहोदयस्य सांप्रदायिकविचारगर्भितः निर्दिश्यमानत्वनिरुक्तिप्रबन्धः, युवव्याकरणविदुषः श्रीमनीषशर्मणः भूवादयो धातवः इति प्रबन्धः, (इमौ द्वौ वैयाकरणप्रबन्धौ नव्यन्यायशैल्या विचारिताविति विशेषः) एवं अद्वैतसिद्धिकाराभिप्रायप्रकाशनपरः श्रीवासुदेवशर्मणः प्रबन्धश्च अत्यन्तं श्लघनीयाः वर्तन्ते।

परिसरीयव्याकरणाध्यापकः श्रीओम् शर्मा, परिसरीयन्यायविभागीयशोधच्छात्रः श्रीअंशुमानपाठकः, श्रीयशवन्तत्रिवेदी, श्री हरीशः, श्रीदेवेन्द्रः इमे विचारसङ्गोष्ठ्यामुपस्थापितं शोधप्रबन्धं विस्तरेण विलिख्य ग्रन्थस्य शोभावर्धने उपकारकाः वर्तन्ते इत्येतेभ्यः सर्वेभ्यः धन्यवादान् प्रकाशयामि। मामस्मिन् कार्ये संप्रेरितवद्भ्यः निर्वहनकुशलेभ्यः परिसरनिदेशकेभ्यः प्रो०.के.बी.सुब्बरायुडुमहोदयेभ्यश्च धन्यवादं प्रकटयामि। नैककार्याणि निवर्त्य ग्रन्थस्य सम्पादने महदुपकारकं शोधच्छात्रं श्रीकिशोरशर्माणं अभिनन्दामि। एवं कार्यालयीयौ श्रीचन्दनरावतः श्रीअङ्कितश्च निबन्धान् उट्टङ्क्य ग्रन्थस्य विन्यासकार्यमपि सम्पादितवन्ताविति ताभ्यां एवं ग्रन्थनिर्माणे प्रत्यक्षाप्रत्यक्षरुपेणोपकारकेभ्यश्च धन्यवादमाविष्कृत्य शोधप्रबन्धकुसुममिमं करुणामूर्तेः उमारमणस्य चरणद्वन्द्वे सप्रश्रयं समर्पयामि।

इत्थं सुधीजनविधेयः

**डॉ0 आर्.बालमुरुगः**

सम्पादकः तथा न्यायविभागाध्यक्षः

# विषयानुक्रमणिका



◆◆◆




विशिष्टव्याख्यां वितरन्ति श्रीवीरनारायणपाण्डुरङ्गीवर्याः



मुख्यातिथिं सम्मानयन्ति परिसरनिदेशकाः




प्रो० के.बी.सुब्बरायुडुवर्याणाम् आध्यक्ष्यभाषणम्

राष्ट्रियसङ्गोष्ठ्यां विचारप्रस्तोतारः अध्यापकाः शोधच्छात्राश्च












# तमः समीक्षा

**प्रो. अ. हरिदासभट्टः**
प्राचार्यचरः
पूर्णप्रज्ञविद्यापीठम्, बेङ्गलूरु

तमोऽन्धकारः। तच्च नीलरूपवत्त्वात्, क्रियावत्त्वाच्च द्रव्यमिति मीमांसकाः वेदान्तिनश्च। वैशेषिकास्तु प्रौढप्रकाशकतेजःसामान्याभाव एव तम इति वदन्ति। तथा च सूत्रम्–

'द्रव्य–गुण–कर्म–निष्पत्तिवैधर्म्यात् भाऽभावस्तमः' (५.२.१९)

द्रव्यत्वे हि तमसः पृथिव्यामन्तर्भावः सम्भावितः। नीलरूपवत्त्वात्। स चैवं निराकृत उदयनाचार्येण किरणावल्याम्– 'नापि पाथः–पृथिव्योः, आलोकनिरपेक्षचक्षुर्ग्राह्यत्वात्' इति। रूपवद्द्रव्यं हि सति आलोके गृह्यते। अन्धकारस्तु नैवम्। अतः न तद् रूपिद्रव्यम् इति।

अत्र तत्त्वदीपिकायां चित्सुखाचार्याः– 'आलोकविरोधिनः तमसश्च आलोकाभाव–व्यञ्जनीयतया तन्निरपेक्ष–चक्षुर्विषयत्वोपपत्तेः। न चेत्, आलोकाभावस्यापि रूपवदभावतया, घटाभाववत्, आलोकनिरपेक्ष–चक्षुर्विषयत्वं न स्यात्। तद्विरोधितया तदनेपक्षत्वं तु प्रकृतेऽपि समानम्।' इति।

अत्र विषयद्वयम् प्रतिपादितम्– प्रथमः– तमः द्रव्यम्। तच्च आलोकाभावव्यङ्ग्यम्। आलोकाभावः तमसः व्यञ्जक इति यावत्। सति आलोके तदभावरूप–व्यञ्जकाभावेन तमसोऽप्रतीतिः। तदेवम् आलोकनिरपेक्षचक्षुर्ग्राह्यत्वमुपपादितम्।

द्वितीयस्तु– तमसोऽभावात्मकताम् अङ्गीकुर्वतां नैयायिकानां मतेऽपि तुल्य आक्षेपः। तेजोऽभावस्तमः। तेजश्च रूपवत्। रूपवतः तस्याभावग्रहेऽपि प्रतियोगिग्राहकसामग्री अपेक्षिता। घटाभावोऽत्र दृष्टान्तः। अतः तमसः ग्रहेऽपि आलोकः सहकारी भवेदेव। यदि आलोकविरोधित्वात् तेजोभावस्य न तद्ग्रहे आलोकः सहकारीत्युच्यते तर्हि तमसः द्रव्यत्ववादिनापि एवं वक्तुं शक्यत्वाद् द्रव्यत्वमेवास्तु, इति।

प्रथमेऽयं समाधिः- नीलरूपं तमसि उद्भूतम्। उद्भूतरूपवतः द्रव्यस्य चक्षुषा ग्रहणे व्यञ्जकं नापेक्षितम्। अत आलोकाभावस्य व्यञ्जकत्वकल्पनम् अप्रामाणिकम्। ततश्च द्रव्यत्वे तमस आलोकसहकृतचक्षुर्ग्राह्यत्वं स्यादेव।

द्वितीयस्य समाधानं किरणावल्याम् आचार्यैरेवमुक्तम् - 'यद्ग्रहे हि यदपेक्षं चक्षुः तदभावग्रहेऽपि तदपेक्षते। यदि चालोकग्रहे आलोकान्तरमपेक्षेत तदालोकाभावेऽपि आलोकापेक्षा स्यात्। न त्वेतदस्ति। प्रत्युत विरोध एव। तस्मिन् सति हि तदभाव एव न स्यात्, किं तदपेक्षेण चक्षुषा गृह्येत?' इति।

अयमभिप्रायः। घट आलोकसहकृत-चक्षुर्ग्राह्य इति तदभावोऽपि आलोकसहकारे सत्येव गृह्यते। न चैवं तेज आलोकान्तरसहकारेण गृह्यते। अतस्तदभावग्रहेऽपि नालोकापेक्षा। प्रतियोगिग्राहकसामग्र्या एव अभावग्राहकत्वात्, इति।

अपि च तेजोऽभावग्रहे तेजोपेक्षा चेत् घटाभावग्रहेऽपि घटापेक्षा स्यात्।

अस्मिन्नेव विषये श्रीव्यासतीर्थाः तर्कताण्डवे एवं दोषमुद्भावयन्ति- 'रात्रिञ्चराणा-मुलूकादीनां ज्ञातॄंणामिव अन्धकारस्य ज्ञेयस्यापि आलोकनिरपेक्षचाक्षुषसाक्षात्कार-सम्भवात्।' इति।

अस्यायमाशयः - अस्मदादीनां चक्षुः आलोके सत्येव रूपवतोऽर्थान् गृह्णाति। रात्रिञ्चराणां चक्षुः आलोकनिरपेक्षं गृह्णाति। न चैतावता तेषामिन्द्रियमचक्षुः भवति। एवं ग्राहकेषु इन्द्रियेषु वैलक्षण्यमिव ग्राह्ये विषयेऽपि वैलक्षण्यं भवितुमर्हति। घटपटादिकम् आलोकसहकृत-चक्षुर्ग्राह्यम्। तमोरूपं तु द्रव्यम् आलोकाभावेऽपि चक्षुर्ग्राह्यमिति। तावन्मात्रेण तमसोऽद्रव्यत्वे रात्रिञ्चराणां चक्षुरपि अचक्षुः स्यात्, इति।

इदमत्र वक्तव्यम् - रात्रिञ्चराणां चक्षुरपि न सर्वथाऽऽलोकाभावे अर्थं गृह्णाति। तमस्स्वत्यपि देशे तेजःपरमाणूनां सद्भावात्। अत एव न्यायमते प्रौढ-प्रकाशतेजःसामान्याभाव एव तमः, न तु तेजःसामान्याभावः। यथा, मत्स्यादिकं प्राणवायुम् उपजीवन्ति, अथापि जलमुत्सृज्य स्थले नैव जीवन्ति। जलगतमेव विरलं वायुं पिबन्ति। तथा रात्रिञ्चरा अन्धकारे विरलालोकसहायेनैव अर्थान् पश्यन्ति। आधुनिकविज्ञानसिद्धोऽयं विषयः। तस्मात् सर्वं चक्षुः सत्येवालोके अर्थज्ञानं जनयन्ति। यथा चक्षुषि वैलक्षण्यं नास्ति तथा दृश्येऽपि

वस्तुनि वैलक्षण्यं नैव स्यात्। तद्यदि तमः द्रव्यं स्यात् तर्हि सत्येवालोके चक्षुषा गृह्येत, इति सुष्ठूक्तम्।

अत्रोक्तं तर्कताण्डवे – तमस आलोकाभावत्वेऽपि 'नीलं तमः' इति धीः न स्यादिति बाधकं सममेव। रूपसाक्षात्कारस्य आलोकसापेक्षचक्षुर्जन्यत्वनियमात्।

अत्र वर्धमानोक्तं समाधानमेवमस्ति – रूपवति द्रव्ये रूपसाक्षात्कारे आलोकापेक्षा। शुक्ले पटे नैल्यभ्रमः सत्येवालोके उत्पद्यते। तत्र विशेष्यस्य पटस्य ग्रहार्थमालोकोऽपेक्षितः, न रूपभ्रमार्थम्। तमश्च अभावरूपत्वात् न वस्तुतः रूपवत्। अतः तमसि रूपग्रहार्थं नालोकस्यापेक्षा, इति।

तदिदं दूषितं ताण्डवे – 'दधिधवलमाकाशम्', 'नीलमाकाशम्' इत्यादौ नीरूपेऽप्याकाशे रूपभ्रमः सत्येवालोके भवति। अतः नाधिकरणग्रहणे आलोकस्य उपक्षीणत्वम्, किन्तु रूपसाक्षात्कारे एव तस्य हेतुत्वम्, इति।

इदं तु न शोभनम् – आकाशे मेघादौ दृश्यमानस्य नैल्यादेरारोप इति, अयं गृह्यमाणारोपः। तमसि पुनः स्मर्यमाणस्य नीलरूपस्यारोपः। नहि नीलद्रव्यगतं रूपं दृष्ट्वा तस्यारोपः तमसि क्रियते। किं नाम? भास्वरशुक्लविरोधरूपे तमसि शुक्लरूपसादृश्यदर्शनेन स्मृतं नीलरूपं तमसि आरोप्यते। तदुक्तं किरणावल्याम्– 'स्मर्यमाणं चैतद्रूपमारोप्यते रजतत्ववत्, न गृह्यमाणम्'। तस्मात् वस्तुतः रूपाश्रयस्य धर्मिणः ग्रहणाभावात् न 'नीलं तमः' इति प्रत्यक्षम् आलोकमपेक्ष्योत्पद्यते, इति।

कथं भावधर्मारोपः अभावे इति चेत्, काऽत्र कथंता? दुःखाभावे सुखत्वारोपः सर्वानुभवसिद्धः। यथा दुःखापगमे 'सुखिनः संवृताः' इत्यनुभवः स्वरससवाही लोकानाम्।

२. अयमपरः हेतुः वैशेषिकाणां तमसोऽद्रव्यत्वे – रूपवतो द्रव्यस्य स्पर्शवत्त्वनियमात्। न च तमसि स्पर्श उपलभ्यते। तथा सति त्वगिन्द्रियग्राह्यत्वप्रसङ्गात्। तस्मात्तमः न द्रव्यम्, इति।

अत्र वदन्ति चित्सुखाचार्याः– न चास्पर्शादेव तमसः रूपवत्त्वाभावः। रूपग्राहकप्रत्यक्षविरोधे हेतोः कालात्ययापदिष्टतया तदभावानुमानानुदयात्।

अयमभिप्रायः – 'तमः न रूपवत् स्पर्शाभावात्' इति नैयायिकानामनुमानम्।

तदिदं 'नीलं तमः' इति प्रत्यक्षबाधितम्, इति।

तदिदमयुक्तम्। 'नीलं तमः' इति प्रत्यक्षं भ्रमः। नहि स्वयं बाधितेन भ्रमेण अनुमानस्य बाधः। नैल्यभ्रमे चेदं प्रयोजकम् उक्तमाचार्येण– 'शुक्लभास्वरविरोधित्व–सारूप्येण तदारोपोपपत्तेः।' इति । नीलरूपं शुक्लभास्वररूपविरोधि। तमश्च तेजोविरोधित्वादेव तादृशरूपविरोधि। अतस्तदपि नीलं प्रतीयते। एवं च तमः न रूपवद्द्रव्यम्।

तर्कताण्डवे एवमुक्तम्– स्पर्शवतोऽपि वायोः नीरूपत्ववत् रूपवतोऽपि तमसः स्पर्शाभावः सम्भवतीति अप्रयोजकः हेतुः, इति। तदिदं न विचारसहम्– 'यत्र रसः तत्र रूपम्' इति नियमः न धूम–वह्न्योरिव कार्य–कारणमूलः। अव्यभिचरितसहचार–दर्शनादेव रूप–रसयोर्व्याप्तिः गृह्यते। एवमेव 'यत्र रूपं तत्र स्पर्शः' इति पृथिव्यादिषु त्रिषु सहचारदर्शनात् व्याप्तिः गृह्यते। तद्बलात् तमः यदि रूपिद्रव्यं स्यात् तर्हि स्पर्शोऽपि स्यात्। स्पर्शाभावात् रूपमपि नास्ति। तेन द्रव्यत्वमपि त्याज्यम्।

३. रूपवत्ताप्रतीतिवत् क्रियाप्रतीतिरपि तमसि भ्रान्तिरेव। यदि तमसि क्रिया स्यात् तर्हि दीपादिद्रव्यानुसरणं न स्यात्। तस्मात् दीपाद्यपसरणौपाधिकी तमसि क्रियाप्रतीतिः।

अत्रोक्तं चित्सुखाचार्येण– निश्चलेऽपि पर्वते छायायाः गतिदर्शनात्। दीपानुरोधनं च न – आलोकागमनेन गच्छति छाया इति प्रतीतेः गमने चागच्छतीति प्रतीतेः, इति।

अयं भावः – तमस्वति देशे दीपः आगच्छति, तमो गच्छति। तद्देशात् दीपः गच्छति, तमः आगच्छति। एवं च प्रकाश–तमसोः विरुद्धक्रिया प्रतीयते। कथं तर्हि तेजोनुविधानं तमसः? इति।

तदिदम् अयुक्तम् – यत्र गतिः स्वाभाविकी तत्रान्यानुविधानं न भवति। तमसि आवरकद्रव्यस्य चलनेन कदाचित् गतिः दृश्यते। यथा आतपत्रम् अनुसरति छाया। क्वचिच्च तेजसाम् आकरस्य द्रव्यस्य चलनेन चलनम्। यथा सूर्यस्य गत्या आवरकस्य निश्चलस्य पर्वतस्य छाया चलतीव भाति। नोभयत्रापि तमसः गमनम्। रात्रौ दीपस्य चलने तत्पृष्ठत आलोकाभाव उत्पद्यते, न तु तमः चलति। तर्हि यतश्चलति तत्र प्रकाशः स्यात्। तस्मात् निरन्तरं तमस उत्पत्तिरेव तत्र, न तु चलनम्। तदुक्तमाचार्यैः– तस्माद् आवरकद्रव्ये

गच्छति यत्र यत्र तेजसोऽसन्निधिः तत्र तत्र छायाग्रहणाद् अन्यदेशतानिबन्धनः गतिभ्रमः, इति।

'दीपः आगच्छति तमो गच्छति' इत्यस्य सति दीपे प्रतियोगिसत्त्वेन तेजोऽभावः न प्रतीयत इत्येवार्थः। तमसः द्रव्यत्वपक्षेऽपि यदा दीपः देशान्तरादागच्छति तदा तमः दीपमनुसरति। उत्तरोत्तरदेशे तमः नश्यति। 'तमः गच्छति' इत्यस्य 'तमो नश्यति' इत्येवार्थः, न तु देशान्तरसंयोगीति। अतः नाज्ञप्रवादमनुसृत्य चोदनीयम्।

इत्थं च तमसि क्रियाप्रतीतिः भ्रान्तिरेव।

४. वर्धमानोपाध्यायः तमसः तेजोऽभावत्वे अखण्ड्यामेकां युक्तिमाह– प्रौढालोकमध्ये मुखमधः कृत्य स्थापितस्य कुम्भस्य अन्तः अन्धकारः कथमुत्पन्नः? तेजोविरोधेन तत्र तमसाम् अवयवा अपि असम्भाविताः, येन तमोऽवयवैः महातमस आरम्भः शङ्क्येत। नापि अन्यतः तदवयवानाम् आगमनं सम्भवति। सर्वतः तेजःसङ्कुलत्वात्। अतस्तत्र कुम्भावयवप्रतिबन्धेन तदन्तः तेजसामभाव एव तम इत्यकामेनापि अङ्गीकार्यम्।

अत्रोक्तं तर्कताण्डवे – प्रदीपागमनानन्तरं तमोभूयिष्ठे प्रासादे सर्वत आलोकमण्डलवद् आवरणानन्तरम् अन्धकारस्य आरम्भसम्भवात्, इति।

अत्र विचारणीयम् – दीपागमने वेगवताम् आलोकावयवानां प्रसादे प्रसरणं सम्भावितम्। आलोकहेतुभूतस्य दीपस्य सत्त्वात्। प्रकृते च तमसः हेतुभूतं मूलद्रव्यमेव नास्ति। अतः कथं पूर्वोक्तप्रदेशे तमस उपलब्धिः ? इति।

अथ यदि तेजोऽभाव एव तमः तर्हि अननुभूततेजसां तमः प्रत्ययः न स्यात्। प्रतियोगिज्ञानाभावाद् इति चेत्, इष्टापत्तिः। 'गिरिदरीविवरवर्तिनः योगिनः न ते तिमिरावलोकिनः। तिमिरदर्शिनश्चेत् नूनं स्मृतालोकाः।

विधिमुखप्रत्ययस्तु असिद्ध एव। न हि नञोऽप्रयोग एव विधिः, प्रलय–विनाश–अवसानादिषु व्यभिचारात् नञन्तर्भावेन वाक्यार्थे पदप्रयोग इति तु समं समाधानम्।

तस्मादभावरूपमेव तमः ।

# सहशब्दशक्तिनिर्णयः व्युत्पत्तिवाददिशा

**डॉ.आर् बालमुरुगः**
न्यायविभागाध्यक्षः,
श्रीरघुनाथकीर्तिपरिसरः,
केन्दियसंस्कृतविश्वविद्यालयः,
देवप्रयागः, उत्तराखण्डः-249301

**भूमिका**- समानकाले सम्पद्यमानक्रिययोः यौगपद्यं (समानकालिकत्वम्) बोधयितुं सामान्यतः सह शब्दः प्रयुज्यते। समानकालीनत्वमिव समानदेशस्थत्वमपि क्रिययोः सहशब्देनावबोध्यते इति विशेषविचारं प्रामाणिकप्रयोगमुवेन वर्णयित्वा सहेन स्थूलतः प्रतीयमानार्थमादाय प्रयोगविशेषेषु दोषमुद्भाव्य श्रीमद्गदाधरभट्टाचार्याः स्वीययुक्तिजाल-विभूषिते व्युत्पत्तिवादाख्ये ग्रन्थमणौ नैकविधपरिष्कारप्रदर्शनपूर्वकं सहार्थे निष्कर्षं प्रकटयामासुः। प्रकृतशोधप्रबन्धे तेषां विचारसरणिमवलम्ब्य सहशब्दस्य शक्तिः निर्धार्यते।

**सहयोगे तृतीयाविधायकानुशासनवर्णनम्**- पुत्रेण सह पिता आगच्छतीत्यादौ **सह युक्तेऽप्रधाने**[1] इति सूत्रेण सहशब्दयोगात्पुत्रपदोत्तरं तृतीया विभक्तिः भवति। सहशब्देन तदर्थे विशेषण- तयान्वीयमानाप्रधानभूतार्थवाचकशब्दात्तृतीयानेन अनुशिष्यते। यदाहुः भट्टाचार्याः- **सहार्थयोगेऽपि साहित्यप्रतियोगिवाचकपदात् तृतीया"**[2] इति। सहशब्दार्थः साहित्यं, तस्मिन् विशेषणभूतार्थः प्रतियोगीति उच्यते। धातूपस्थाप्यक्रियायाः प्रत्ययार्थद्वारा यस्मिन्नर्थे अन्वयः भवति सोऽर्थः प्रधानम्, अन्यः अप्रधानार्थः इति सामान्यतः व्यपदिश्यते। उक्तोदाहरणे आगच्छतीत्यागमनक्रियायाः प्रत्ययार्थद्वारा पितरि अन्वयात् पिता प्रधानं, पुत्रः अप्रधान[3] भवति। सहयोगे इव तत्समानार्थकसाकं सार्धं सममिति शब्दानां योगेऽपि अनेनैवानुशासनेन तृतीयानिष्पत्यर्थं सहेऽप्रधाने इति अपठित्वा युक्तपदं संयोज्य सहयुक्तेऽप्रधाने इति सूत्रं रचयामासुः। ततः सहार्थकशब्दानां योगे अप्रधानवाचकात्तृतीया भवतीति सूत्रार्थः सम्पद्यते।

सहशब्दशक्तिविचारे पूर्वपक्षः- अथ सहशब्दस्य स्वसमभिव्याहृतक्रियापदोपस्थाप्य-क्रियासमानकालीनक्रियान्वयित्वे शक्तिः इति वदामः।स्वसमभिव्याहृतत्वं शक्तिपरिचायकमात्रं, न वाच्यार्थशरीरप्रविष्टमिति ज्ञेयम्। स्वपदं सहपरम्। सहशब्दघटितवाक्यघटकक्रियापदमेव

स्वसमभिव्याहृतक्रियापदमिति उच्यते। क्रियाया: येन रूपेण प्रधानार्थेऽन्वय: भवति तद्रूपमेव क्रियान्वयित्वमित्यनेन विवक्षितं वर्तते। यथा पुत्रेण सह पिता आगच्छतीत्यत्र आगमनक्रियाया: आख्यातार्थकृतिद्वारा पितरि अन्वय: इति तत्र सहशब्दस्य आगमनक्रियासमानकालीनागमनकर्तृत्वे शक्ति: इति स्वीक्रियते। एवं दध्ना सहोदनो भुज्यते इत्यत्र भुज्धात्वर्थभोजनस्य प्रत्ययार्थकर्मत्वद्वारा ओदनेऽन्वय: इति भोजनसमानकालीनभोजनकर्मत्वे शक्तिरिति विशिष्यावधार्यम् इति चेन्नैतद् युक्तिसहं वर्तते।

सहशब्देनैव उक्तप्रयोगेषु क्रियासमानकालीनक्रियाकर्तृत्वादिकं बोध्यते इति तदुत्तरं क्रियापदप्रयोगवैयर्थ्यं स्यात्। परन्तु प्रयुज्यते क्रियापदमिति नोक्तार्थे सह शब्दस्य शक्ति: कल्पयितुमुचिता।

न च वाक्ये क्रियापदसत्वे एवोक्तदिशा सहशब्दस्य शक्ति: निर्धारयितुं शक्यते न तद्विना, नात: तद्वैयर्थ्यमापादयितुं शक्यमिति वाच्यम्। यदि उक्तार्थे तस्य शक्ति: स्वीक्रियते तदा सहशब्दघटितवाक्याच्छाब्दबोध: न भवितुमर्हति। तथाहि **पुत्रेण**[4] सह पिता आगच्छतीति वाक्येन एवं शाब्दबोध: जायते इति वक्तव्यम्- पुत्रकर्तृकागमनकालीनागमनकृत्याश्रय: पिता आगमनानुकूलकृतिमानिति। क्रियाकर्तरि क्रियाकर्तृत्वान्वयबोध: निराकाङ्क्षतया न सम्भवति। सहशब्देन क्रियाकर्तृत्वं बोधितमित्यत: पुन: धातूपस्थाप्यक्रियाया: कर्त्राकाङ्क्षा न वर्तते इति भाव:।

भेदसम्बन्धेन शाब्दबोधं प्रति उद्देश्यतावच्छेदकविधेययो: भेद: (ऐक्याभाव:) कारणं भवति। अत एव पदार्थोपस्थित्यादिसकलकारणसत्वेपि घटं जानाति चैत्र: जानातीत्यादि वाक्येन शाब्दबोध: न जायते। तत्रोद्देश्यतावच्छेदकघटज्ञाने विधेयभूतज्ञानभेदाभावात्। एवं प्रकृते उद्देश्यतावच्छेदकपुत्रकर्तृकागमनसमानकालीनागमनकर्तृत्वे विधेयस्यागमनकर्तृत्वस्य भेद: असम्भवी।

अत एव क्रियासमानकालीनक्रियायां सहशब्दस्य शक्ति:, सहशब्दस्य निपातत‌या तदर्थ: भेदसम्बन्धेन(कर्तृत्वादिसम्बन्धेन) साक्षात् प्रधानार्थेन्वेतीति पक्षोपि न युक्तिसङ्गत: वर्तते। कर्तृत्वादिसम्बन्धेन क्रियाविशिष्टे पुरुषादौ प्रकारतया क्रियाकर्तृत्वबोधेऽपि आकाङ्क्षाया: विरहाच्छाब्दबोध: उक्तदिशा तस्य शक्तिकल्पने नैव सम्भवति।

ननु (स्वसमभिव्याहृतक्रियापदोपस्थाप्य) क्रियाकालीनत्वे एव सहशब्दस्य शक्ति:

इति कल्प्यते। तस्य विशेषणतया धातूपस्थाप्यक्रियायामन्वयः विवक्षितः। ततः उक्तवाक्यादीदृशबोधः भवति पुत्रकर्तृकागमनसमानकालीनागमनानुकूलकृतिमान् पितेति। एवं दध्ना सहोदनो भुज्यते इत्यतः दधिकर्मकभोजनसमानकालीनभोजनकर्म ओदनः इति बोधः भवति। तस्मात् क्रियासमानकालीनक्रियान्तर्भावेण शक्त्यकल्पनान्न द्विधाक्रियाभानप्रयुक्त-क्रियापदवैयर्थ्यम्, न वा निराकाङ्क्षतायाः अवसरः इति चेन्न।

यदि सहशब्दः क्रियान्वय्यर्थवाचकः तदा सः क्रियापदसापेक्षः भवतीति सपुत्रः इति समासानुपपत्तिः प्रसज्यते। **समर्थः पदविधिः** इत्यनुशासनेन समर्थपदान्युद्दिश्यैव समासादिवृतिः विधीयते। पदसम्बन्धी यो विधिः सः समर्थपदाश्रितः बोध्यः इति सूत्रार्थः वर्ण्यते शाब्दिकैः। पदनिष्ठसामर्थ्यञ्च वृत्तिमात्रघटकपदार्थान्वितस्वार्थबोधकत्वं विवक्षितम्। वृत्तिघटकार्थान्वितस्वार्थबोधकत्वे सति वृत्यघटकान्वितार्थाबोधकत्वमिति फलितार्थः। सपुत्रः पिता आगच्छतीत्यादौ सपुत्रः इति समासे कर्तव्ये सहशब्दस्य पुत्रपदार्थान्वितार्थबोध-कत्वरूपसामर्थ्यम् अपेक्ष्यते। (पुत्रेण सह यः इति विग्रहवाक्यं तत्र प्रदर्श्यते।) परन्तु सहार्थः क्रियायामन्वेतीति वृत्यघटकार्थान्वितस्वार्थबोधकतया सामर्थ्यं हीयते। अतः सहशब्दस्य निरुक्तार्थेशक्तिकल्पने समासानुपपत्तिः दूषणम्।

**इदन्त्ववधेयम्**- समासादिवृत्तिघटकपदस्य वृत्यघटकपदसापेक्षत्वे (वृत्यघटक-पदार्थान्वितस्वार्थबोधकत्वमेव सापेक्षत्वं विवक्षितम्।) सापेक्षमसमर्थवद् भवतीति न्यायेन सामर्थ्यं नास्तीति सामान्यतः न निषेद्धुं शक्यते। सुन्दरः राजपुरुषः इति साधुप्रयोगः प्रथितः वर्तते। नात्र सुन्दरपदार्थस्य समासघटकपुरुषपदार्थेऽन्वये असामर्थ्यात् समासासम्भवः आशङ्क्यते। अतः समासादिवृत्तिघटकविशेषणवाचकपदस्यैव वृत्यघटकपदसापेक्षत्वं सामर्थ्यहानिप्रयोजकं भवतीति नियमः। सुन्दरः राजपुरुषः इत्यत्र पुरुषपदं विशेष्यवाचकमतः तस्यान्यसापेक्षत्वेऽपि भवति समासः। सपुत्रः इत्यत्र सहशब्दः न विशेष्यवाचकः किन्तु विशेषणसमर्पकः। अतः तस्यान्यसापेक्षत्वे असामर्थ्यात् समासो न सम्भवतीति आक्षेपः सूपपन्नः।

**सहशब्दशक्तिविचारे सिद्धान्तः**- क्रियाकालीनत्वे एव सहशब्दस्य शक्तिः। तच्च धातूपस्थाप्यक्रियान्वयिप्रधानार्थे (प्रथमान्ताद्यर्थे) एवान्वेति। अतः सहपदस्य वृत्तिघटकपदसापेक्षतया सामर्थ्यात् सपुत्रः इति समासः उपपद्यते। (पुत्रेण सह इति विग्रहः) एवञ्च पुत्रेण सह पिता आगच्छतीत्यत्र पुत्रकर्तृकागमनकालीनः पिता

आगमनानुकूलकृतिमान् इति बोधः जायते। अन्वयबोधे असति बाधके उद्देश्यतावच्छेदक-कालावच्छिन्नत्वं विधेये विधेयविशेषणे वा (यथायोग्यं) भासते इति व्युत्पत्या उद्देश्यतावच्छेदकपुत्रकर्तृकागमनकालावच्छिन्नत्वस्य विधेयतावच्छेदके आगमनक्रियायां भानात् सहशब्देन विवक्षितं साहित्यमेककालिकत्वं क्रिययोः अवबुध्यते।

**नञ्घटितवाक्ये विवक्षितान्वयबोधानुपपत्तिप्रदर्शनम्**- अथ सहार्थस्य क्रियासमानकालीनत्वस्य प्रधानार्थे यद्यन्वयः तदा पुत्रेण न सह पिता आगच्छतीत्यतः पुत्रकर्तृकागमनकालीनत्वस्यैवाभावः नञा बोध्यते इत्यङ्गीकार्यम्। नञसत्वे यस्मिन् धर्मिणि येन सम्बन्धेन यद्धर्मावच्छिन्नस्यान्वयः भवति नञ्सत्वे तद्धर्मिणि तत्सम्बन्धा-वच्छिन्नतद्धर्मावच्छिन्नाभावः नञा बोध्यते इति व्युत्पत्तेः। तथा सति नञ् घटितोक्तवाक्यजन्यशाब्दबोधे प्रसज्यप्रतिषेधः (अत्यन्ताभावः।) क्रियान्वितप्रत्ययार्थं प्रति उद्देश्यतावच्छेदकतयैव भासते न तु विशेष्यतया इति प्रसज्यप्रतिषेधः तं प्रति मुख्यः (विशेष्यः) इति अनुभवः व्याहन्यते। **नञर्थात्यन्ताभावे क्रियान्वितप्रत्ययार्थस्य** [6] प्रतियोगिविधयान्वये एव तत्सम्भवति। (आगमनकर्तृत्वाभावबोधनायैव नञ् प्रयुज्यते इति प्रष्टुरभिप्रायः।) न च पर्युदासस्थले पर्युदासे (पर्युदासः अन्योन्याभावः) क्रिया वा क्रियान्वितप्रत्ययार्थो वा नान्वेति तद्वत् क्वचित् प्रसज्यप्रतिषेधे क्रियान्विताख्यातार्थानन्वयेपि न क्षतिरिति वाच्यम्। पुत्रेण सह नागच्छतीति अनागच्छन्तं पितरमुद्दिश्यापि प्रयुज्यते, तदा तत्र पुत्रागमनकालीनत्वाभाववति पितरि आगमनकर्तृत्वस्य वाक्यात् प्रतीयमानस्य बाधात् तद्वाक्यमप्रमाणं प्रसज्यते। तत्र पुत्रागमनाभावकालीने पितरि आगमनकर्तृत्वाभावः नञा बोध्यते इत्यपि नोचितम्। (एकस्य नञुपस्थापिताभावस्य विवक्षावशाद् द्विधा भानमुपेत्येदं शङ्कितम्।) यदा पुत्रः एवायाति न पिता तदापि एवं प्रयोगः प्रसिद्धः। तत्र पुत्रागमनकालावच्छिन्ने पितरि आगमनकर्तृत्वभावसत्वेऽपि पुत्रागमनाभावकालावच्छिन्ने आगमनकर्तृत्वभावबोधने वाक्यस्याप्रामाण्यापत्तिः। साहित्यबोधनाय सहशब्दप्रयोग इव साहित्याभावबोधनायैव नञ्घटितसहशब्दप्रयोगः प्रवर्तते इति तन्निर्वाहाय अन्यथा शक्तिः सहशब्दस्य निर्वाच्येति आक्षेपस्य सारः।

**सहशब्दशक्तिनिर्धारणे परमसिद्धान्तः**- सहशब्दस्य समभिव्याहृतधातूपस्थाप्य-क्रियाकालीनत्वे एव शक्तिः[७]। पुत्रेण सह गच्छतीत्यादौ असमासस्थले सहार्थस्य धातूपस्थाप्यक्रियायामेवान्वयः भवति। अतः सहशब्देन विवक्षितसाहित्यस्य बोधः उपपद्यते।

एवं सपुत्रः पिता गच्छतीत्यादि समासस्थले पुत्रेण सह यः इति विग्रहवर्णनात् सपुत्रपदस्य पितृपदसामानाधिकरण्यात् (तत्पदसमानलिङ्गवचनकत्वं सामानाधिकरण्यं विवक्षितम्।) प्रधानार्थे पितरि एव लक्षणयोपस्थापितस्य समासार्थस्य पुत्रागमनकालीनस्याभेदेनान्वयः भवति। अतः समस्यमानपदसापेक्षतया सहशब्दस्य समासः निर्वहति।

**नञ्घटितवाक्येभ्यः विवक्षितबोधोपपादनम्ः–** पुत्रेण सह पिता नागच्छतीत्यत्रापि सहार्थस्य क्रियायामेवान्वयात् पुत्रागमनकालीनागमनकर्तृत्वभावः (विवक्षितसाहित्याभावः) एव नञा बोध्यते। तथाहि पुत्रेण सह नागच्छतीति प्रयोगः उभयथा भवति। यदा पुत्रं विना पिता आगच्छति तदा प्रयोगः, एवं यदा पुत्रः एव आगच्छति न पिता तदा। प्रथमस्थले पितरि आगमनकर्तृत्वसत्वेऽपि पुत्रकर्तृकागमनकालावच्छिन्नागमनकर्तृत्वस्य विशिष्टस्याभावोऽबाधितः इति पुत्रेण सह पिता नागच्छतीति वाक्यात् पितरि तादृशविशिष्टसाहित्याभावः नञा बोध्यते। एवं द्वितीयस्थले पितरि आगमनकर्तृत्वमेव नास्तीति पूर्वोक्ततादृशविशिष्टागमनकर्तृत्वभावः निराबाधः अवबोध्यते। अतः स्थलद्वयेऽपि उक्तवाक्यात् यथार्थबोधस्य निष्पत्या तद्वाक्यं प्रमाणमिति व्यवस्थितं भवति। यदा पितापुत्रौ उभावपि नागच्छतः तदा अयं प्रयोगः यदि प्रामाणिकः तत्कालेऽपि नानुपपत्तिः विवक्षितबोधस्य पुत्रागमनकालावच्छिन्नागमनकर्तृत्वाभावस्य पितरि सत्वादिति सर्वविधप्रयोगाणां विवक्षितसाहित्यभावावबोधकानां सुष्ठु उपपत्या सर्वं समञ्जसमिति अवगन्तव्यम्। प्रतिपादितञ्च भट्टाचार्यैः **पुत्रेण सह नागच्छतीत्यादौ च क्रियायामेव तादृशसहार्थान्वयः इति पुत्रागमनकालीनागमनकर्तृत्वाद्यभावः प्रथमान्तार्थे प्रतीयते इति सर्वं सुस्थम्**[४] इति।

**सपुत्रः इत्यादि समासोपपादनम्** – अथ सपुत्रः इत्यादि समस्तरूपोपपत्तिः कथं भवतीति विचार्यम्। यतः सपुत्रः इति बहुव्रीहिः समासः सम्मतः वर्तते। बहुव्रीहिः नित्यसमासः इति शास्त्रसम्प्रदाये प्रथितं वरीवर्तते। (विग्रहवाक्याप्रतिपाद्यार्थबोधकत्वं नित्यसमासत्वमित्यभिप्रेतमत्र।) बहुव्रीहौ विग्रहवाक्यात् यादृशविशेष्यविशेषणभावापन्नबोधो जायते समासवाक्यात् तद्विपरीतविशेष्यविशेषणभावापन्नबोधो जायते इति अनुभवसिद्धं वर्तते। यथा **पीतम् अम्बरं यस्येति विग्रहवाक्यात् यत्सम्बन्धि पीताभिन्नं वस्त्रम् इति वस्त्रविशेष्यकयत्सम्बन्धप्रकारकबोधो जायते। पीताम्बरः इति समासात् पीतवस्त्रसम्बन्धी (पीतवस्त्रस्वामी, पीतवस्त्रधारी इति वा) इत्येवं पीतवस्त्र–**

**प्रकारकपुरुषविशेष्यकबोधः**[9] जायते। परन्तु पुत्रेण सह यः इति विग्रहवाक्यात् सपुत्रः इति समासाच्च पुत्रकर्तृकक्रियाकालावच्छिन्नस्य पुरुषस्य समानस्यैव बोधनात् (समासविग्रहाभ्यां विशेष्यविशेषणभावे वैपरीत्येनाबोधनादिति भावः) नित्यसमासत्वनियमः भज्यते इति चेन्न।

सत्यं बहुव्रीहिः नित्यसमासः। परं बहुव्रीहिमात्रस्य नित्यसमासत्वनियमो नास्ति। **अन्यपदार्थप्रधानकः बहुव्रीहिरिति**[10] प्रसिद्धम्। यस्मिन् बहुव्रीहौ द्वितीयाद्यन्तपदेन अन्यपदार्थः प्रधानभूतः उपस्थाप्यते तस्यैवायं नियमः इत्यवधेयम्। यथा प्राप्तोदको ग्रामः इत्यादिषु नित्यसमासत्वनियमः सङ्गच्छते। सपुत्रः इत्यत्र पुत्रेण सह यः इति विग्रहप्रदर्शनात् अन्यपदार्थः प्रथमान्तपदेनोपस्थाप्यते न द्वितीयाद्यन्तपदेन। अतः नात्र नित्यसमासत्वनियमः प्रसज्यते। समासव्यासाभ्यां समानाकारकबोधजनने बहुव्रीहेः न क्षतिः इति यावत्। तदयं निष्कर्षः प्रथमान्तातिरिक्तद्वितीयाद्यन्तपदोपस्थाप्यान्यार्थप्रधानकबहुव्रीहिः नित्यसमासः इति।

न च यत्र प्रथमान्तेनान्यपदार्थः उपस्थाप्यते तत्र बहुव्रीहिसमासः न भवतीति शाब्दिकैः निषिध्यते। यथाहुः प्रथमार्थे तु न। वृष्टे देवे गतः इति। वृष्टिकाले गतः (पुरुषः) इत्यर्थे वृष्टदेवः इति समासः न भवति किन्तु वृष्टे देवे गतः इति व्यस्तमेव प्रयोक्तव्यम् इति नियमः व्याकरणसम्प्रदाये आम्नायते। अतः सपुत्रः इति कथं समासः इति वाच्यम्।

प्रथमान्तेनान्यार्थबोधने ''अनेकमन्यपदार्थे'' इति अनुशासनेन समासः न भवतीति निषिध्यते। सहशब्देन समासः **''तेन सह तुल्ययोगे''**[11] इति सूत्रान्तरेण भवतीति नानुपपत्तिः। तुल्ययोगे समानकालिकक्रियायोगे वर्तमानं सह इति पदं तृतीयान्तपदेन समस्यते सः बहुव्रीहिसमासः भवतीति सूत्रार्थः। तस्मात् सपुत्रः इति समस्तरूपं साध्विति मन्तव्यम्।

**विशेषार्थप्रकाशनम्** – एतदनु क्वचित्पुस्तके एवं पाठः उपलभ्यते –**तथापि सपुत्रोनागच्छतीत्यादौ पूर्वोक्तदिशाऽनुपपत्तिः द्रष्टव्या**[12]" इति। अयं पाठः यदि प्रामाणिकः तदास्य भावार्थः एवं वर्णनीयः यदत्र प्रयोगानुपपत्तिप्रदर्शने भट्टाचार्याणां तात्पर्यं न वर्तते। किन्तु सपुत्रः नागच्छतीति प्रयोगसमर्थनमार्गः विचारणीयः इति। पूर्वोक्तदिशाऽनुपपत्तिरित्यस्य पुत्रेण सह पिता नागच्छतीति व्यस्तप्रयोगे सहार्थस्य मुख्यार्थे

पितरि अन्वयपक्षे उक्तदोषाः सपुत्रः नागच्छतीति समस्तप्रयोगे प्रसज्यन्ते इत्यर्थः।

अनुपपत्तिवारणप्रकारः सम्प्रति विचार्योद्घाट्यते। अधस्तनविचारेणेदमवगतं वर्तते यत् सपुत्रः नागच्छतीति प्रयोगः द्वयोः कालयोः भवतीति। यदा पुत्रं विना पिताऽऽयाति तदा, पितरं विना पुत्रोऽऽयाति तदा च। उभयत्रापि पिता सपुत्रः नागच्छतीति वाक्ये धातोः पुत्रागमनकालावच्छिन्नागमनं लक्षणया अर्थः भवति। सपुत्र इति समस्तपदम् उक्तार्थे तात्पर्यग्राहकं भवति। तादृशागमनस्यानुकूलत्वसम्बन्धेनाख्यातार्थकृतौ, कृतेश्च नञर्थाभावे प्रतियोगितयान्वये सति तद्वाक्यात् पुत्रकर्तृकागमनकालावच्छिन्नागमनकर्तृत्वाभाववान् पितेति शाब्दबोधः विवक्षितसाहित्याभावमवगाहमानः उपपद्यते इति व्यस्तः इव समस्तोऽपि प्रयोगः प्रामाणिकः भवति। अतः न काऽपि अनुपपत्तिरिति अवगन्तव्यम्।

**सहशब्दार्थघटककालः कीदृशः इति विचारः**- सहशब्दवाच्यार्थशरीरप्रविष्टः समानकालः क्वचित्क्षणरूपः क्वचित्तदतिरिक्तस्थूलकालः इत्येवं प्रामाणिकप्रयोगबलेन विविच्यावधार्यम् इति भट्टाचार्याः व्यवास्थापयन्।

व्यवस्थायै द्वौ दृष्टान्तौ प्रदर्शितौ। तथाहि यदि सहशब्दस्य प्रयोगः सामान्यतः समानक्षणे सम्पद्यमानक्रिययोः बोधनाय प्रवर्तते इति सहार्थः क्रियासमानक्षणः इत्युच्यते तदा प्रासोष्ट **"शत्रुघ्नमुदाचेष्टमेका सुमित्रा सह लक्ष्मणेन**[13]**"** इति महाकविभट्टप्रयोगः असङ्गतः स्यात्। नहि समानक्षणे लक्ष्मणशत्रुघ्नप्रसवौ सञ्जातौ। अतः तत्र सहशब्दस्य होराद्यात्मकस्थूलकाले शक्तिरिति स्वीकार्यम्। ततः द्वयोः प्रसवयोः स्थूलकाले सम्पत्त्या न प्रयोगानुपपत्तिः। न च तर्हि सहस्य स्थूलकाले एव शक्तिरिति कल्पनीयमिति वाच्यम्। पुत्रागमनपूर्वमागन्तरि पितरि पुत्रेण सह नागतः इति प्रयोगानुपपत्तिः। पुत्रागमनस्थूलकाला-वच्छिन्नागमनकर्तृत्वमेव पितरि वर्तते इति तादृशकर्तृत्वाभावः बाधितः। (अत्र पुत्रागमनप्रभृति पित्रागमनपर्यन्तस्थायी वण्डकालः स्थूलकालपदेन स्वीक्रियते।) अतः तत्र समानक्षणः एव समानकालपदेन शक्यतया विवक्षितः इति वाच्यम्। तदा पुत्रागमनसमानक्षणा-वच्छिन्नागमनकर्तृत्वाभावस्य सत्वेन प्रयोगः उपपद्यते। तस्मात् तत्र तत्र विशिष्य समानकालः वाच्यः भवतीति ज्ञेयम्।

समानकालवत् समानदेशोऽपि सहशब्दवाच्यः इति व्यवस्थापनम्-भट्टाचार्याः समानकालवत् समानदेशोऽपि सह शब्देन बोध्यते इति प्रमाणिकप्रयोगबलेन धर्मशास्त्रप्रयोगमुखेन

च व्यवास्थापयन्। तथाहि समानकाले एव विभिन्नस्थले यौ भुञ्जाते तावधिकृत्य चैत्रेण सह मैत्रः न भुङ्क्ते इति प्रयोगः प्रसिद्धः इति तदुपपत्तये सह शब्दस्य समानदेशेपि शक्तिः वर्तते इति कल्प्यते। तत्र एकभोजनशाला समानदेशतया विवक्षितेत्यतः भोजनसमानकालीनत्वविशिष्टैकभोजनशालारूपसमानदेशीयत्वे सहशब्दस्य शक्तिः। ततः उक्तवाक्यात् चैत्रकर्तृकभोजनसमानकालीनसमानदेशीयभोजनकर्तृत्वाभाववान् मैत्रः इति बोधः जायते। तदुक्तं भट्टाचार्यैः-''तत्रैकशालरूपभोजनाधारोऽपि सहशब्दार्थेऽन्तर्भावनीयः" इति।

एवं ''आलापाद्गात्रसंस्पर्शान्निःश्वासात् सहभोजनात्" इति धर्मशास्त्रीय श्लोकघटकसहशब्देन एकपङ्क्तिरूपसमानदेशः विवक्षितः। अतः पतितभोजनसमानकालीन-समानपङ्क्तिकभोजनमेव अधर्महेतुः, पतितभोजनसमानकालेऽपि भिन्नपङ्क्तिकभोजनम् न तथेति अवगन्तव्यम्।

एवं ''याजनं योनिसंबन्धं स्वाध्यायं सह भोजनम्।
सद्यः पतति कुर्वाणः पतितेन न संशयः"।।

इति स्मृत्यन्तरे सहशब्दवाच्यार्थसमानदेशत्वेन न समानशाला न वा समानपङ्क्तिः विवक्षिता किन्तु एकपात्रं विवक्षितम्। तस्मात् ततोपि पतितभोजनसमानकालीन-समानपात्रीयभोजनम् अधर्महेतुः इति प्राप्यते।

निगमनम्-सहशब्दस्य समभिव्याहृतपदोपस्थाप्यक्रियासमानकालीनत्व-विशिष्टसमानदेशीयत्वे एव शक्तिः इति निष्कर्षः। समानकालः प्रामाणिकप्रयोगानुसारं क्वचित् क्षणः क्वचित् स्थूलकालः इति विशिष्यावधार्यम्। एवं प्रामाणिकप्रयोगबलेन समानदेशोपि शालिदिरूपो अवधार्यः। यद्यपि सामान्यरूपेणैव (कालत्वेन देशत्वेन च रूपेणेत्यर्थः) समानकालदेशौ सहशब्दवाच्यौ भवतः तथापि योग्यताबलात् तात्पर्यवशाच्च विशेषरूपेण शाब्दबोधे भासेते इत्यतः कथं तयोः विशेषरूपेण भानं संभवतीत्याक्षेपस्य नास्त्यवसरः इति शम्।

## सन्दर्भग्रन्थसूचिः


1) पाणिनीसूत्रम् - 2/3/19

2) व्युत्पत्तिवादे तृतीयाकारके सहशब्दार्थविचारः - पुटसंख्या - 117

3) सिद्धान्तकौमुदी/ बालमनोरमा - पुटसंख्या - 638

यथा- पितुरत्रागमन क्रिया संबन्धः शाब्दः, पुत्रस्य तु तत्साहित्यगम्यः आर्थिक इति तस्याप्राधान्यम्" इति।

4) पाणिनीसूत्रम् - 2/1/1

5) व्युत्पत्तिवादे सहार्थविचारे विवृतं भट्टाचार्यैः।

यथा - तथासत्याख्यातार्थोद्देश्यतावच्छेदकतयैव नञर्थभानस्योपगन्तव्यतया प्रसज्यप्रतिषेधस्थले निषेधस्य तं प्रति प्राधान्येन भाननियमव्याघातात् इति।

6) व्युत्पत्तिवादः। सहार्थविचारः। पुटसंख्या -120

7) अनेकमन्यपदार्थे इति सूत्रव्याख्यानभूतसिद्धान्तकौमुदी अवलोकनीया। यथा - अनेकं प्रथमान्तम् अन्यपदार्थे वर्तमानं वा समस्यते स बहुव्रीहिः" इति।

8) सिद्धान्तकौमुदी/ बालमनोरमा- पुटसंख्या- 131 यथा  अत्र विग्रहवाक्ये ग्रामकर्मकप्राप्तिकर्तृ उदकमित्येवं ग्रामस्य विशेषणतया.... बोधः। समासे तु एकार्थीभावमहिम्ना उदककर्तृकप्राप्तिकर्मीभूतो ग्रामः इत्येवं ग्रामस्य

विशेष्यतया ......... बोधः" इति।

9) सिद्धान्तकौमुदी/ समासप्रकरणम्/ पुटसंख्या -131

10) पाणिनीसूत्रम् - 2/2/24

11) पाणिनीसूत्रम् - 2/2/28

12) व्युत्पत्तिवादः/ सहार्थविचारः/ पुटसंख्या -120

13) भट्टिकाव्यम्/ प्रथमसर्गः/ श्लोकसंख्या -14। कौसल्ययाऽसावि सुखेन रामः प्राक् केकयीतो भरतस्ततोऽभूत् इति पूर्वपादः।

14) व्युत्पत्तिवादः/ सहार्थविचारः/ पुटसंख्या -119

15) प्रसिद्धकोशे वाचस्पत्ये एवं शब्दकल्पद्रुमे संसर्गः इति पदस्यार्थनिरूपण-सन्दर्भे अयं श्लोकः देवलस्मृतौ उपलभ्यते इति निर्दिष्टं वर्तते। उभयत्र श्लोकस्यास्योत्तरपादः इत्थं लिखितः -"सह शय्यासनाध्यायात् पापं संक्रमते नृणाम्" इति।

16) पूर्वोक्तकोशद्वये संसर्गपदार्थविवरणे एव अयमपि श्लोकः देवलमुनि-कर्तृकत्वेन निर्दिष्टः वर्तते। परन्तु उत्तरपादः किञ्चिद्विलक्षणः उपलभ्यते।
यथा- याजनं योनिसम्बन्धं स्वाध्यायं सहभोजनम्।
कृत्वा सद्यः पतन्त्येते पतितेन न संशयः" इति।

## शोधप्रबन्धलेखनार्थं परामृष्टग्रन्थानां सूची-

1) व्युत्पत्तिवादः/ कर्ता - श्रीमद्गदाधरभट्टाचार्यः/ संपादकः एन्. एस्. रामानुजताताचार्यः/ प्रकाशकः - राष्ट्रियसंस्कृतविद्यापीठम्, तिरूपतिः/ 1985

2) व्युत्पत्तिवादः/ प्रकाशनामकव्याख्याकारः तथा संपादकः पण्डितश्री लक्ष्मीनाथशर्मा/ प्रकाशकः चौखम्बा सीरिज ऑफिस, वाराणसी/ 1931

3) व्युत्पत्तिवादः/ दीपिका टीकाकारः पं. शिवदत्तमिश्रः/ प्रकाशकः चौखम्बा सुरभारती प्रकाशनम्, वाराणसी/1983

4) सिद्धान्तकौमुदी/ कर्ता श्रीमद्भट्टोजिदीक्षितः/ बालमनोरमा टीका सहिता

5) भट्टिकाव्यम्।

6) वाचस्पत्यम्।

7) शब्दकल्पद्रुमः

# संकेतरूपेच्छाविषये नव्यतराचार्याणां मतम्

पण्डितः वीरनारायणाचार्यः पाण्डुरङ्गी
वेदान्तनिकायाध्यक्षः,
कर्नाटकसंस्कृतविश्वविद्यालयः, बेङ्गळूरु

ईश्वरेच्छा शक्तिः इति प्राचीननैयायिकमतम्। शक्तिश्च पदेन सह पदार्थस्य संबन्धः। सा च "अस्माच्छब्दादयमर्थो बोद्धव्यः" इतीश्वरेच्छारूपा इति प्राचीनाः।

## पटस्य घटपदशक्यत्वापत्तिः लक्षणोच्छेदापत्तिश्चेति शङ्का

ननु घटपदबोध्यत्वप्रकारकेश्वरेच्छाया घटपदशक्तित्वे तस्या ईश्वरमात्रवृत्तित्वेन घटे घटपदशक्तिर्न स्यात्। अतः विशेष्यतासंबन्धेनैव तादृशेच्छावत्त्वं शक्तिरित्युपेयम्। तथाचेश्वरस्यानेकेच्छाकल्पने गौरवात् "घटपदाद्घटो बोद्धव्यः, पटपदात्पटो बोद्धव्यः" इति समूहालम्बनरूपा सकलपद-पदार्थविषयिण्याः एकेच्छाव्यक्तेरेव तत्राङ्गीकरणीयतया तस्याश्च विशेष्यतासंबन्धेन पटेऽपि सत्वेन पटस्यापि घटपदशक्यत्वप्रसङ्गः।

एवं भगवदिच्छायाः सन्मात्रविषयकत्वेन गङ्गापदाल्लक्षणया तीरबोधस्यापि जायमानत्वेन तद्विषयत्वस्यापीश्वरेच्छायामावश्यकत्वात् गङ्गापदजन्यबोधविषयत्व-प्रकारकेच्छायास्तीरेपि सत्त्वाच्छक्त्यैव तीरबोधोपपत्तेर्लक्षणोच्छेदापत्तिः इति चेत्।

न। तत्पदजन्यबोधविषयतात्वावच्छिन्नप्रकारतानिरूपितविशेष्यतासंबन्धेने-श्वरेच्छावत्त्वस्य तत्पदशक्तित्वाभ्युपगमेनेश्वरेच्छानिरूपितघटपदजन्यबोधविषयतात्वा-वच्छिन्नप्रकारतानिरूपितविशेष्यतायाः पटादावसत्त्वेन न पटादेस्तादृशविशेष्यतासंबन्धेने-श्वरेच्छावत्त्वमिति पटादेर्घटपदशक्यत्वापादनासंभवात्। अन्यथा तदभाववति तत्प्रकार-कत्वेनेश्वरेच्छाया विसंवादित्वापत्तेः।

तीरादौ गङ्गापदवाच्यत्वव्यवहाराभावेनेश्वरेच्छायां "गङ्गापदजन्यबोधविषयस्तीरं भवतु" इत्याकारकता न स्वीक्रियते, अपितु "विषयता गङ्गापदजन्यबोधीया भवतु, तीरं

विषयतावद्भवतु" इत्येवंरीत्या विशकलिताकारतैव। एवञ्च विषयतात्वेनैव गङ्गापद-जन्यबोधविषयतायास्तीरे भगवदिच्छायामवगाहनात्तीरादौ गङ्गापदजन्यबोधविषयतात्वाव-च्छिन्नप्रकारतानिरूपितविशेष्यतासंबन्धेन नेश्वरेच्छावत्त्वमिति तीरादौ गङ्गापदशक्यत्वाभावात् तीरादिविषयकशाब्दबोधनिर्वाहाय लक्षणाङ्गीकारस्याप्यावश्यकत्वात्।

### शक्त्यादिस्वरूपविषये नव्यतरमतम्

अर्थप्रतिपादकत्वं वृत्तिः। न तु पदपदार्थयोः संबन्धः, संबन्धस्य वृत्तिहेतुत्वेन वृत्तिरूपत्वासंभवात्। गङ्गायां घोष इत्यत्र गङ्गापदस्य प्रवाहे वृत्त्यभावव्यवहाराच्च। अन्यथा तदापि गङ्गापद-प्रवाहयोस्संबन्धस्याबाधितत्वात् वृत्त्यभावव्यवहारानुपपत्तेः।

सा च वृत्तिः त्रिविधा- अभिधा, गौणी, लक्षणा चेति। शक्त्या प्रतिपादकत्वमभिधा। शक्तिश्च अतीन्द्रियं पदार्थानन्तरं, यथा वह्न्यादौ दाहशक्तिः। न तु शक्तिरेव अभिधा। गङ्गायां घोष इत्यत्र गङ्गापदस्य प्रवाहे अभिधाव्यवहारापातात्।

शक्यसादृश्यं निमित्तीकृत्य प्रतिपादकत्वं गौणी। शक्यसंबन्धं निमित्तीकृत्य प्रतिपादकत्वं लक्षणा।

### न्यायमतेन देवदत्तादिपदेपि शक्तिः

आधुनिकैः पित्रादिभिरेकादशेऽहनि सङ्केतिते नाम्नि शक्तिरस्त्येव, एकादशेऽहनि पिता नाम कुर्यादिति श्रुत्या ईश्वरेच्छायाः एकादशाहकालीनपित्रुच्चारण-विषयनामत्वेन सामान्यरूपेण तत्रापि सत्त्वात्। एकादशाहकालीनपित्रुच्चारितशब्दजन्य-बोधविषयः पित्रादिसङ्केतितविशेष्यो भवत्वित्याकारिकाया एव भगवदिच्छायाः कल्पनात्।

आधुनिकमात्रसङ्केतिते नदीवृद्ध्यादिपदे तु न शक्तिरिति संप्रदायः।

### इच्छैव शक्तिरिति नव्यमतम्

नव्यास्तु ईश्वरेच्छा न शक्तिः, तथा सत्याधुनिकसङ्केतितान्नद्यादिपदात् शक्तिभ्रमं लक्षणाग्रहं च विना शाब्दबोधो न स्यात्, ईश्वरानङ्गीकर्तॄणां प्राभाकरादीनामीश्व-रेच्छारूपशक्तिग्रहासंभवेन शाब्दबोधानुपपत्तेश्च। किंत्विच्छैव, तेनाधुनिकसङ्केतितेपि

शक्तिरस्त्येवेत्याहु:। मतद्वयेप्यपभ्रंशात्मकगगर्यादिपदे शक्तिभ्रमादेव बोध इत्यवधेयम्। असाधुशब्दानुमितसाधुशब्दाद्वा शाब्दप्रमा स्वीकार्या। घटार्थेपभ्रंश: गगरीशब्द:।

### संस्कृतभाषामयशब्देष्वेव शक्ति: इत्यत्र प्राच्य-नव्यतरयो: मतभेद:

अत्रेदं बोध्यम्-प्राचीनमते तु केवलं संस्कृतभाषामयशब्देष्वेव शक्ति:, न तु प्राकृतादिभाषामयशब्देषु तेषां प्रतिदेशं बहुत्वात् व्यवस्थानुपपत्ते:।

नव्यतरमतेन तु तत्रापि शक्तिरस्त्येव। द्राविडादिभाषामयशब्देभ्योपि तत्तद्भाषीय-व्याकरणसंस्कृतेभ्य: शाब्दप्रमोत्पत्ते:।

# व्याकरणे न्यायशास्त्रोपादेयता

**डॉ. वैद्यसुब्रह्मण्यः**
सहायकाचार्यः, संस्कृतविभागः,
केन्द्रीयविश्वविद्यालयः धर्मशाला,
कांगडा, हि.प्र.

**विषयवस्तुपरिचयः**

चतुर्वर्गपुरुषार्थेषु मोक्षसाधनाय वेदार्थज्ञानमत्यावश्यकमस्ति। वेदस्य शब्दराशित्वाच्च शब्दार्थयोः उभयोरपि ज्ञानमनिवार्यमेव। भावबुभुत्सायै उपयुज्यमाना भाषा शुद्धा अपशब्दमलविमुक्ता च भवेत्। साधुभिः शब्दैरेव अर्थः प्रत्येतव्यः न तु अपशब्दैः। अतः अर्थप्रत्यायनाय शब्दज्ञानम् अत्यावश्यकम्। भावप्रकटनाय च शब्दज्ञानमावश्यकं यच्च व्याकरणमन्तरा न संभवति। अतः शब्दप्रतिपत्तये व्याकरणमध्येयम्। यथा व्याकरणशास्त्रं मोक्षसाधकमिति कथितं तथैव षोडशानां पदार्थानां ज्ञानेन निश्रेयसाधिगमो भवति न्यायशास्त्राध्ययनेन। तदेवोक्तं न्यायशास्त्रस्य प्रथमसूत्रेण **प्रमाणप्रमेयसंशयप्रयोजन-दृष्टान्तसिद्धान्तावयवनिर्णयतर्कवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानां तत्त्वज्ञाना-न्निःश्रेयसाधिगमः**[1] इति। अतः अस्मात् स्पष्टं प्रतीयते यत् व्याकरणन्यायाभ्यामाभ्यां शास्त्राभ्यां धर्मार्थकाममोक्षेषु चतुर्वर्गपुरुषार्थेषु परमपुरुषार्थस्य मोक्षस्य निश्रेयसस्य सिद्धिर्भवतीति। किञ्च व्याकरणन्यायशास्त्राधिगमः इतरशास्त्राधि गमोपयोगी अपि। अत एवोक्तं काणादं पाणिनीयं च सर्वशास्त्रोपकारकम् इति। अस्मिन् प्रबन्धे व्याकरणशास्त्राधिगमे न्यायशास्त्रस्योपयोगं कैश्चिदुदाहरणैः प्रतिपाद्यते।

**विषयवस्तुबिन्दवः**

1. व्याकरणन्यायशास्त्रोपादेयता
2. व्याकरणशास्त्रे न्यायशास्त्रोपादेयता
    - 2.1. प्रथममुदाहरणम्
    - 2.2. द्वितीयमुदाहरणम्

2.3. तृतीयोदाहरणम्

2.3.1 प्रथमा युक्तिः

2.3.2 द्वितीया युक्तिः

2.3.3 तृतीया युक्तिः

2.4. चतुर्थमुदाहरणम्

## 1. व्याकरणन्यायशास्त्रोपादेयता

शिष्यते अनेन इति शास्त्रमिति व्युत्पत्त्यनुसारेण यदस्मान् शास्ति तत् शास्त्रम्। शासु अनुशिष्टौ इत्यस्मात् धातोः कर्मणि ष्ट्रन्प्रत्यये कृते शास्त्रशब्दो निष्पद्यते। मानवकल्याणाय नाना शास्त्राणि प्रावर्तन्त। मानवः स्वहृद्गतभावान् भाषया अभिव्यनक्ति। किञ्च चतुर्वर्गपुरुषार्थेषु मोक्षसाधनाय वेदार्थज्ञानमत्यावश्यकमस्ति। वेदस्य शब्दराशित्वात् शब्दप्रतिपत्तये व्याकरणमध्येयम्। तच्च व्याकरणशास्त्रं वेदपुरुषस्य मुखमिति जेगीयते। तदेवोक्तं

**छन्दःपादौ तु वेदस्य हस्तौ कल्पोथपठ्यते।**
**ज्योतिषामयनं चक्षुः निरुक्तं श्रोत्रमुच्यते।।**

**शिक्षा घ्राणं तु वेदस्य मुखं व्याकरणं स्मृतं।**
**तस्मात् साङ्गमधीत्यैव ब्रह्मलोके महीयते।।** इति।

एवं व्याकरणशास्त्रस्य महत्त्वं बहुभिः बहुधा निरूपितमेव।

यदि वयम् उभयोः व्याकरणन्यायशास्त्रयोः परस्परोपकार्योपकारकभावम- धिकृत्य चिन्तयामः तदपि अनयोः शास्त्रयोः अस्त्येव। व्याकरणेन यथा न्यायशास्त्राधिगमः सुकरः तथैव न्यायशास्त्राधिगमेन व्याकरणशास्त्राधिगमश्च सुकरो भवति इति स्फुटमेव प्रतीयते। अस्मिन् प्रबन्धे व्याकरणशास्त्राधिगमे न्यायशास्त्रस्योपयोगः कुत्र कुत्र इति कैश्चिदुदाहरणैः अहमत्र प्रतिपिपादयिषामि।

# 2. व्याकरणे न्यायशास्त्रोपादेयता

## 2.1 अथ प्रथममुदाहरणं

न्यायशास्त्रे गन्धवती पृथिवी इति पृथिवीलक्षणं ऊदुः तच्छास्त्रप्रवराः। तत्र गन्धः आधेयः अतः गन्धे आधेयता। गन्धे वर्तमाना आधेयता गन्धनिष्ठाधेयता। पृथिवी अधिकरणम् अतः पृथिव्याम् अधिकरणता। पृथिव्यां वर्तमाना अधिकरणता पृथिवीनिष्ठाधिकरणता। आधेयताधिकरणतयोः सापेक्षपदार्थत्वात् निरूप्यनिरूपकभावसम्बन्धेनान्वयः। तथा च गन्धनिष्ठाधेयतानिरूपिताधिकरणताश्रयः पृथिवी इति पृथिव्याः लक्षणं पर्यवस्यति। एवमुक्तेपि काले गन्धनिष्ठाधेयतानिरूपिताधिकरणतायाः सत्त्वात् अतिव्याप्तिः। सर्वाधारः कालः इति न्यायेन कालिकसम्बन्धेन गन्धः कालेपि अस्त्येव इति अतिव्याप्तिः प्रदर्शिता। येन सम्बन्धेन यद्यत्र अस्ति इत्युच्यते **तन्निष्ठाधेयता तत्सम्बन्धावच्छिन्ना**[2] इति न्यायानुसारं काले कालिकसम्बन्धेन गन्धस्य सत्त्वात् काले वर्तमानगन्धनिष्ठाधेयता कालिकसम्बन्धावच्छिन्ना। पृथिव्यां गन्धस्य समवायसम्बन्धेन सत्त्वात् पृथिव्यां वर्तमानगन्धनिष्ठाधेयता समवायसम्बन्धावच्छिन्ना भवति। अतः इत्थं कालेपि गन्धस्य सत्त्वात् तद्वारणाय गन्धनिष्ठाधेयातायां समवायसम्बन्धावच्छिन्नत्वं निवेश्यते। तेन समवायसम्बन्धेन यत्र गन्धः भवति सा पृथिवी इति अर्थसिद्ध्या काले कालिकसम्बन्धेन गन्धस्य सत्त्वेपि समवायसम्बन्धेनासत्त्वात् नातिव्याप्तिः इत्युक्तम्। तथैव व्याकरणेपि कर्मलक्षणे एषा तुल्या रीतिः आदृता। तच्चात्र प्रतिपाद्यते। तद्धि फलाश्रयः कर्म इति कर्मणः लक्षणं प्रोक्तं वर्तते। यत्र फलं भवति तत् कर्म इति अर्थः उपलभ्यते। फलाधि–करणं कर्म इति अर्थः पर्यवस्यति। अर्थात् फलनिष्ठाधेयतानिरूपिताधिकरणताश्रयः कर्म इति निष्कृष्टं लक्षणं सिद्ध्यति। एवमुक्ते कालिकसम्बन्धेन काले च फलस्य सत्त्वात् काले कर्मलक्षणमतिव्याप्तम्। तद्वारणाय फलनिष्ठाधेयतायां समवायसम्बन्धावच्छिन्नत्वं निवेश्यते येन काले अतिव्याप्तिः वार्यते। किञ्च फलाश्रयस्य इव फलस्यापि व्यपदेशिवद्भावेन कर्मसंज्ञा उक्ता, स्तोकं पचति इत्यत्र येन फलसमानाधिकरणस्य फलविशेषणस्य स्तोकशब्दार्थस्यापि कर्मसंज्ञा सिद्ध्यति। स्तोकशब्दार्थस्य पच्धात्वर्थफले विक्लित्तौ अन्वयः। अतः स्तोकं पचति इति वाक्यस्य अल्पा विक्लित्तिः यथा स्यात् तथा पचति इत्यर्थः लभ्यते। एवञ्च व्यपदेशिवद्भावेन फलसमानाधिकरणस्य फलविशेषणस्य स्तोकशब्दार्थस्यापि कर्मसंज्ञायां सिद्धायां स्तोकं पचति इति प्रयोगश्च सिद्धो भवति।

एवमेव शीघ्रं पठति इत्यादिप्रयोगश्च ऊह्या:। एतदर्थं च कर्मलक्षणे फलनिष्ठाधेयतायां तादात्म्यसम्बन्धावच्छिन्नत्वं च निवेशितम्। अत: समवायतादात्म्यान्यतरसम्बन्धा–वच्छिन्नफलनिष्ठाधेयतानिरूपिताधिकरणताश्रय: कर्म इति कथनेन फलविशेषणस्यापि कर्मसंज्ञायां सिद्धायां, तन्निमित्तिकद्वितीयाविभक्तेश्च सिद्धौ स्तोकं पचति इत्यादिप्रयोगा: च सिद्ध्यन्ति।

### 2.2 द्वितीयमुदाहरणम्

शब्दानुशासनाख्ये अस्मिन् शास्त्रे शब्दपदवाच्य: क: इति जिज्ञासा अभवत्। भाष्यकारेण पस्पशाह्निके अस्मिन् सन्दर्भे **गौरित्यत्र क:** शब्द: इति पृष्ट्वा **येनोच्चारितेन सास्नालाङ्गूलककुद्खुरविषाणिनां संप्रत्ययो भवति स शब्द:** इति अवादि। अनेन वैयाकरणनिकाये स्फोट: शब्दपदवाच्य: इति प्रतीयते। स्फोटस्य प्रत्यक्षविषयत्वाभावात् **सामान्यभिन्नत्वे सति श्रोत्रेन्द्रियग्राह्यत्वं शब्दस्य लक्षणम्**[3] इत्यपि वक्तुं शक्यम्। इदं च लक्षणं नागेशेन उद्योते प्रोक्तम्। श्रोत्रेन्द्रियग्राह्यत्वमात्रोक्तौ शब्दत्वे अतिव्याप्ति:। कथमिति चेत् यो यदिन्द्रियग्राह्य: तन्निष्ठा जाति: तदभवाश्च तेनैव इन्द्रियेन गृह्यते इति न्यायानुसारं शब्द: शब्दत्वं शब्दाभाव: च एतत्त्रितयमपि श्रोत्रेन्द्रियेणैव गृह्यते इत्यत: श्रोत्रेन्द्रियग्राह्यत्वमात्रोक्तौ शब्दत्वे अतिव्याप्ति:। अत: तद्वारणाय सामान्यभिन्नत्वमिति दलं निवेशितम् । अन्यथा यो गुण: यदिन्द्रियग्राह्य: तन्निष्ठा जाति: तदभावश्च तेनैव इन्द्रियेण गृह्यते इति न्यायात् शब्दत्वजातेरपि श्रोत्रेन्द्रियग्राह्यत्वात् तत्र अतिव्याप्ति: स्यात्। तथा च सामान्यभिन्नत्वे सति श्रोत्रेन्द्रियग्राह्यत्वं शब्दस्य लक्षणम् इति सिद्धम्। यो यदिन्द्रियग्राह्य: तन्निष्ठा जाति: तदभावश्च तेनैव इन्द्रियेण गृह्यते इति न्यायानुसारं शब्दाभावोपि श्रोत्रेन्द्रियेणैव गृह्यते इत्यत: शब्दाभावे च अतिव्याप्ति: वर्तते। तद्वारणाय च अभावभिन्नत्वे इति दलमप्यत्र निवेशनीयमेव।

### 2.3 तृतीयमुदाहरणम्

पाणिनीयव्याकरणनिकायेस्मिन् प्राचीनवैयाकरणभट्टोजिदीक्षित–नवीनवैयाकरणनागशेयो: मध्ये बहवो मतभेदा: बहुषु स्थलेषु दृश्यन्ते। तत्र रप्रत्याहारविषये दीक्षितनागेशयो: मतभेद: सुविख्यात:। दीक्षित: अत्र कैयटम् अनुसरति। तथा च दीक्षितमते रप्रत्याहारोस्ति। नागेशस्तु रप्रत्याहारं नाङ्गीकरोति। तथा च नागेशस्य रप्रत्याहारखण्डनावसरे

न्यायशास्त्रस्योपादेयता सुस्पष्टैव। तदत्र दीक्षितमतनिरूपणपूर्वकं नागेशमतं निरूप्यते। दीक्षितमतानुसारं रप्रत्याहारसिद्धिरत्र भण्यते। लण् इति माहेश्वरसूत्रे योकारः तस्य अनुनासिकत्वमङ्गीकृतं दीक्षितेन। तेन तस्य अकारस्य उपदेशेजनुनासिक इत् इति सूत्रेण इत्संज्ञा भवति। ततः पश्चात् 'आदिरन्त्येन सहेता' इति सूत्रेण तेन इत्संज्ञकेन अकारेण सह आदिवर्णस्य हयवरट्सूत्रस्थस्य रेफस्य मेलनेन रप्रत्याहारः संपन्नो भवति। स च रप्रत्याहारः रेफलकारयोः द्वयोः संज्ञा भवति। तस्य रप्रत्याहारस्य 'उरण् रपरः' इत्यस्मिन् सूत्रे प्रयोगः दृश्यते। तेन ऋकारस्य स्थाने यः अण् सः रपरः सन्, लृकारस्य स्थाने यः अण् सः लपरः सन् प्रवर्तते इति प्रयोजनं सिद्ध्यति इति। परन्तु नागेशः अत्र विषये विप्रतिपद्यते।

नागेशस्तु रप्रत्याहारस्य सत्त्वं नाङ्गीकरोति। अर्थात् तस्य मते लण्सूत्रे अकारस्य अनुनासिकत्वं नास्ति इति तात्पर्यम्। रप्रत्याहारखण्डनसन्दर्भे तिस्रः युक्तयः प्रोक्ताः नागेशेन निजप्रनिबद्धग्रन्थे लघुशब्देन्दुशेखरे। तासु तिसृषु यक्तिषु तृतीययुक्तौ न्यायशास्त्रोपादेयता वर्तते। तत्र आद्ययुक्तिद्वयं प्रतिपाद्य तृतीययुक्तिमत्र प्रतिपादयामि।

### 2.3.1 प्रथमा युक्तिः

तत्र रप्रत्याहारखण्डने प्रथमा युक्तिः– यदि लण्सूत्रे अकारस्य इत्संज्ञा स्यात् तदा तेन इत्संज्ञकेन अकारेण सह रेफे योजिते, रप्रत्याहारे सिद्धे, तेन रप्रत्याहारेणैव रेफलकारयोः बोधसंभवात्, अतो ल्रान्तस्य[4] इति न्यासस्य स्थाने अतो रान्तस्य इत्येव न्यासं कुर्यात् पाणिनिः। परन्तु पाणिनिः अतो ल्रान्तस्य इत्येव उवाच इति तदत्र प्रमाणं भवति यत् लण्सूत्रे अकारस्य अनुनासिकत्वं नाभिप्रैति पाणिनिः इति सिद्धम्।

### 2.3.2 द्वितीया युक्तिः

अथ द्वितीया युक्तिः – यदि लण्सूत्रे अकारस्य इत्संज्ञा स्यात् तदा तेन इत्संज्ञकेन अकारेण सह यकारे योजिते, यप्रत्याहारे सिद्धे, तेन च यप्रत्याहारेण यवरलाणां बोधः संभवति। एवं सति पाणिनिना 'इको यणचि' इत्यादिषु यण्पदघटितसूत्रेषु यवरलाणां बोधनाय यण्प्रत्याहारः उपयुक्तः वर्तते। अन्यथा सर्वत्र पाणिनिः यप्रत्याहारमेव उच्चारयेत्। अतः पाणिनिना सर्वत्र यण्प्रत्याहारेण व्यवहारः एव प्रमाणं लण्सूत्रे अकारस्य अनुनासिकत्वं नास्ति इति।

### 2.3.3 तृतीया युक्तिः

अथ तृतीया युक्तिः – अत्र युक्तौ न्यायशास्त्रस्य उपादेयता वर्तते। प्रत्याहारेषु अनुबन्धानां ग्रहणं न भवति इत्यस्मिन् सन्दर्भे इयं युक्तिः कथ्यते। प्रत्याहारेषु अनुबन्धानां ग्रहणं न भवति इत्यस्मिन् सन्दर्भे त्रयः हेतवः भाष्यकृता कथयामासिरे। ते च हेतवः आचारात्, **अप्रधानत्वात्, लोपश्च बलवत्तरः**[5] इति ।

तत्र प्रथमहेतोः तात्पर्यमत्र निरूप्यते – आचारात् नाम पाणिनेः व्यवहाराच्च इत्यर्थः। यदि प्रत्याहारेषु इतां ग्रहणं स्यात् तदा अच्प्रत्याहारे ककारोपि अन्तर्भवति। एवं सति अनुनासिकः इत्यादिषु पाणिनिनिर्देशेषु इकारस्य ककारे अचि परे इको यणचि इति सूत्रेण यणा निर्देष्टव्यम्। परन्तु अनुनासिकः इत्यादिशब्देषु इकारस्य स्थाने यणः अदर्शनात्, पाणिनिना यणा अनिर्देशात् ककारस्य अच्त्वं नास्ति इति अनुमीयते। तेन सिद्धं प्रत्याहारेषु इतां न ग्रहणं इति।

अथ द्वितीयः हेतुः – अप्रधानत्वात् इति द्वितीयहेतुः। अज्वर्णेषु मध्ये अज्विजातीयाः उच्चरिताः हल्वर्णाः अप्रधानाः भवन्ति इति अर्थः। अत्र प्राधान्यं नाम प्रत्याहारेषु ग्रहणरूपमेव। तथा च अज्वर्णेषु मध्ये अज्विजातीयाः उच्चरिताः हल्वर्णाः अप्रधानाः सन्तः अच्छब्देन न गृह्यन्ते। अनेनापि सिद्धं यत् प्रत्याहारेषु इतां ग्रहणं न भवति इति।

अथ तृतीयहेतुः – लोपश्च बलवत्तरः इति तृतीयः हेतुः। अनुबन्धानां तस्य लोपः इति शास्त्रेण लोपसिद्धेः तेषाम् अनुबन्धानां लोपेन निवृत्त्या प्रत्याहारेषु इत्संज्ञकानां ग्रहणं न भवत्येव। एतदेव 'लोपश्च बलवत्तरः' इति हेतुना प्रादर्शि भाष्यकृता। तत्सन्दर्भे नागेशेन लघुशब्देन्दुशेखरे यदि इत्संज्ञकानां प्रत्याहारेषु ग्रहणं स्यात् तदा लोपश्च बलवत्तरः इति तृतीयहेतोः अव्यापकत्वं स्यादिति अगादि।

तत्र तृतीयहेतोः अव्यापकत्वज्ञानाय व्याकरणशास्त्रे न्यायशास्त्रोपादेयता वर्तते। अयं च अंशः अत्र निरूप्यते। अनुमितिः अनुमानेन जायते। अनुमानं नाम व्याप्तिज्ञानमेव। एकस्मिन् अनुमाने पक्षसाध्यहेतुदृष्टन्ताः इति एते चत्वारोपि अंशाः भवन्ति। व्याप्तिश्च साध्यहेत्वोः नियत साहचर्यमेव। तयोर्मध्ये साध्यः व्यापकः भवति, हेतुः व्याप्यः भवति। अर्थात् साध्यनिष्ठव्यापकत्वनिरूपितव्याप्यत्वाश्रयो भवति

हेतुः। हेतुश्च साध्याभाववदवृत्तिर्भवेत् अथवा हेत्वधिकरणवृत्त्यत्यन्ताभावाप्रतियोगिसाध्येन समानाधिकरणः भवेत्। यदि साध्याभाववदद्वृत्तिः अथवा हेत्वधिकरणवृत्त्यत्यन्ताभावा-प्रतियोगिसाध्येन समानाधिकरणः न भवेत् तदा सः हेतुः पक्षे साध्यसाधने न क्षमः।

यथा- पर्वतो वह्निमान् धूमात् यथा महानसम् इत्यत्र वह्निः धूमापेक्षया व्यापकः। महानसचत्वरादिषु वह्निधूमयोः साहचर्यदर्शनेपि तप्ताय:पिण्डे धूमस्य असत्त्वात् वह्नेस्सत्त्वात् वह्निः व्यापकः भवति। प्रकृते अनुबन्धानां प्रत्याहारबोधकत्वम् अस्ति वा न वा इति प्रश्ने लोपेन हेतुना अनुबन्धानां प्रत्याहारबोध्यत्वं नास्ति इति अनुमानेन साधितम्। तदत्र अनुमानप्रयोगः इत्थं वर्तते अनुबन्धाः प्रत्याहारजन्यबोधाविषयाः लोपात् इति। अत्र लोपाख्यहेतोः अव्याकत्वम् आक्षिप्तं यदि अनुबन्धानां प्रत्याहारेषु ग्रहणं स्यात्। अनुमानस्थले हेतोः अव्याकत्वम् अर्थात् व्याप्यत्वम् इष्टमेव खलु! इति चेत् न, अत्र अव्यापकत्वम् इत्यस्य पक्षैकदेशावृत्तित्वम् इत्यर्थः अर्थात् अस्य हेतोः भागासिद्धिदोषः अस्ति इति। यदि रप्रत्याहारः स्यात् तर्हि अत्र अकारस्य च हलादिप्रत्याहारेषु ग्रहणात्, लण्सूत्रस्थस्य अकारस्य अच्प्रत्याहारसिद्ध्युत्तरं इत्संज्ञासिद्ध्या हलादिप्रत्याहारेषु इत्संज्ञकस्य अकारस्य ग्रहणाल्लोपो न भवति। अन्यत्र इत्संज्ञकानां वर्णानां लोपः दृश्यते। अतः लण्सूत्रस्थस्य इत्संज्ञकस्य अकारस्य लोपो नास्ति, अन्यत्र इत्संज्ञकस्य लोपदर्शनात्, पक्षैकदेशस्य लण्सूत्रस्थस्य इत्संज्ञकस्य अकारस्य लोपाभावेन लोपाख्यहेतौ भागासिद्धिदोषः समजायते। अतः अत्र भाष्यकृत्प्रदर्शितहेतोः सद्धेतुत्वसाधनाय लण्सूत्रस्थस्य अकारस्य इत्संज्ञा न इति अङ्गीकर्तव्या इति रप्रत्याहारस्य असत्त्वं व्यवस्थापितं ग्रन्थकृता। एवं च अत्र न्यायशास्त्रस्य उपादेयता स्पष्टा प्रतीयते।

## 2.4 चतुर्थमुदाहरणम्

पाणिनिः **विशेषणं विशेष्येण बहुलम्**[6] इति सूत्रं प्रणिनाय। तत्र **सुबामन्त्रिते पराङ्गवत् स्वरे (पा.सू. 2.1.2)इत्यतः सुप्, सह सुपा (पा.सू.2.1.3)** इत्यतः सुपा इत्यनुवर्तते। प्रत्ययग्रहणपरिभाषया तदन्तविधिः। विशेषणं नाम भेदकम् अर्थात् इतरव्यावर्तकम्। विशेष्यं नाम भेद्यम् अर्थात् व्यावर्त्यम्। तथा च भेदकं सुबन्तं समानाधिकरणेन भेद्येन सुबन्तेन बहुलं समस्यते इति सूत्रार्थः सिद्धः। नीलः (नीलरूपम्) अनीलादुत्पलात् नीलमुत्पलं व्यावर्तयति। अतः नीलपदं विशेषणवाचकम्।

उत्पलपदं विशेष्यवाचकम्। अतः नीलपदस्य विशेषणवाचकस्य उत्पलपदेन विशेष्यवाचकेन समासः। विशेषणवाचकस्य उपसर्जनसंज्ञायां तस्य पूर्वनिपातः सिद्ध्यति। नीलं च तदुत्पलं नीलेत्पलं, कृष्णतिलाः, पुङ्गवः, मोषकगवी इत्यादिन्युदाहरणानि। खञ्जकुब्जः कुब्जखञ्जः इत्यादीनि च उदाहरणानि वेद्यानि।

**अत्र कश्चन विचारः प्रस्तूयते –**

नीलोत्पलम् इत्युदाहरणे नीलपदम् अनीलादुत्पलात् नीलम् उत्पलं व्यावर्तयति। अतः नीलपदं विशेषणवाचकम्। उत्पलपदं विशेष्यवाचकम्। अतः नीलपदस्य विशेषणवाचकस्य उत्पलपदेन विशेष्यवाचकेन समासः। विशेषणवाचकस्य तस्य पूर्वनिपातः युक्तः। नीलं च तदुत्पलं नीलेत्पलम् इति रूपं सिद्ध्यति। परन्तु कदाचित् उत्पलं नीलादनुत्पलात् उत्पलं व्यावर्तयति इति उत्पलपदमपि विशेषणं स्यात्। तथा चेत् उत्पलशब्दस्य पूर्वनिपात–स्यादिति चेन्न, जातितद्भिन्नप्रवृत्तिनिमित्तकशब्दानां मध्ये जातिप्रवृत्तिनिमित्तकस्यैव **विशेष्यवाचकत्वम्**[7] इति नियमात् उत्पलशब्दस्य जातिप्रवृत्तिनिमित्तकत्वात् तस्यैव विशेष्यवाचकत्वं, नीलशब्दस्य नीलत्वाख्यगुणप्रवृत्तिनिमित्तकत्वात् न विशेष्यवाचकत्वं, अपि तु विशेषणवाचकत्वमेव। अतः उत्पलपदमेव विशेष्यवाचकम्, नीलपदमेव विशेषणवाचकम्। तेन नीलपदस्यैव पूर्वनिपातः। यत्र पदद्वयमपि जातिभिन्नप्रवृत्तिनिमित्तकं तत्र उभयोरपि विशेषणवाचकत्वसंभवात् पूर्वनिपाते कामचारः। यथा खञ्जश्चासौ कुब्जश्च खञ्जकुब्जः, कुब्जखञ्जः। पाचकपाठकः पाठकपाचकः। खञ्जपाचकः, पाचकखञ्जः इति। अत्र कथितोदाहरणे च जातितद्भिन्नप्रवृत्तिनिमित्तकशब्दानां मध्ये जातिप्रवृत्तिनिमित्तकस्यैव विशेष्यवाचकत्वम् इति नियमस्य अत्र व्याकरणशास्त्रे सञ्चारेण अभीष्टलक्ष्यसिद्धिर्जायते इति स्पष्टं प्रतीयते। अत्रापि न्यायशास्त्रस्य व्याकरणे उपादेयता सुस्पष्टा एव।

**सन्दर्भसूचिः –**

1. तर्कभाषा प्रमाणखण्डः पुटसंख्या 48.।
2. तर्कसङ्ग्रहसर्वस्वम्, श्रीकुरुगंटि रामशास्त्रिविरचितम्।
3. उद्योतः महाभाष्यव्याख्यानम् पस्पशाह्निके प्रोक्तं लक्षणम्।

4. अतः समीपौ यौ ल्वौ तदन्तस्याङ्गस्य अतः वृद्धिः स्यात् परस्मैपदे परे सिचि।

5. महाभाष्यम्, प्रत्याहाराह्निकम्, हयवरट्सूत्रे पुटसंख्या 136 तथा 137।

6. पाणिनीयाष्टाध्यायी 2.1.57.।

7. दिनकरीव्याख्याने रामरूद्र्यां पुटसंख्या 2।

**सन्दर्भग्रन्थाः-**


1. अष्याध्यायी भगवत्पाणिनिविरचिता कृष्णदास अकादमी द्वारा प्रकाशित।

2. वैयाकरणसिद्धान्तकौमुदी, तृतीयो भागः, भट्टोजिदीक्षितविरचिता, बालमनोरमातत्त्वबोधिनीव्याख्याद्वयोपेता, गिरिधरशर्मणा परमेश्वरानन्दशर्मणा च संपादिता, मोतीलाल बनारसीदास द्वारा प्रकाशिता, 2001।

3. तर्कभाषा केशवमिश्रविरचिता चौखम्भासुरभारती प्रकाशन, माधुरी-हिन्दीव्याख्योपेता गजाननशास्त्रिविरचिता, संस्करणम् 2015

4. तर्कसङ्ग्रहः अन्नंभट्टविरचितः, न्यायबोधिनीदीपिकाकिरणावलीपदकृत्य-व्याख्याभिः युतः, व्यासप्रकाशन द्वारा प्रकाशितः तृतीयं संस्करणम्।

5. महाभाष्यम् पतञ्जलिविरचितं, प्रथमभागः, भार्गवशास्त्रिसंशोधितं, चौखम्बासंस्कृतप्रतिष्ठानद्वारा प्रकाशितं, 2010।

6. लघुशब्देन्दुशेखरः नागेशभट्टविरचितः, श्रीपादसत्यनारायणविरचितबाल-बोधिनीसंवलितः, पञ्चसन्ध्यन्तः भागः, तिरुपतिस्थराष्ट्रियसंस्कृत-विद्यापीठेन प्रकाशितः, 2001।

7. न्यायसिद्धान्तमुक्तावली विश्वनाथपञ्चाननविरचिता, चौखम्भा प्रकाशन द्वारा प्रकाशिता 2008।

8. दिनकरी न्यायसिद्धान्तमुक्तावलीव्याख्या दिनकरशर्मणा विरचिता, चौखम्भा प्रकाशन द्वारा प्रकाशित 2008।

# नैयायिकदूषितव्यञ्जनावृत्तेः साहित्यशास्त्रदृशा समर्थनम्

**डॉ. मनीषजुगरानः**
सहायकाचार्यः (शिक्षाशास्त्रम्)
केन्द्रीयसंस्कृतविश्वविद्यालयः, वेदव्यासपरिसरः

साहित्यं शास्ति यच्छास्त्रं तत्साहित्यशास्त्रमिति। यत् साहित्यस्याङ्गभूतानि तत्त्वानि विशिष्टनियमैः नियोजयति अर्थात् यत्साहित्यं क्रमबद्धं व्यवस्थितञ्च करोति तत्साहित्यशास्त्रमिति कथयन्ति तद्विदः। शास्त्रे अर्थप्रतीतये शब्दप्रयोगो विधीयते किन्तु साहित्ये शब्दार्थौ उभावप्येकश्रेण्यामेव विद्येते। एतद्धि दृष्टौ निधाय काव्य-मीमांसाकारेण आचार्यराजशेखरेण साहित्यविद्या पञ्चमविद्यात्वेन तथा च चतसृणां मुख्यविद्यानां पुराणदर्शनमीमांसाधर्मशास्त्रादीनां सारभूता कथिता- **"पञ्चमी साहित्यविद्येति यायावरीय, सा हि चतसृणामपि विद्यानां निष्यन्दरूपा"**[1] इति। यज्ज्ञानेन काव्यस्य निर्माणे तत्स्वरूपदोषगुणालङ्कारादीनामवधारणे च शक्तिरुन्मिषति तत्साहित्यशास्त्रम्। भाषायां व्युत्पत्तिवर्धनाय यथा व्याकरणशास्त्रमपेक्षते तथैव काव्ये नैपुण्याय साहित्यशास्त्रमपि। साहित्यशास्त्रस्य ज्ञानं विना काव्ये नैपुण्यं नैव सम्पद्यते वाक्यदोष- दृष्टिश्चापि नोत्पद्यते। साहित्यशास्त्रज्ञानरहितो व्याकरणादिकं जानन्नपि कवयितुमात्मानमसमर्थो हि मनुते। तस्मादेतदपि साहित्यशास्त्रं व्याकरणादिवद् अवश्यमध्येतव्यमिति। एतच्च शास्त्रं वैदिक-लौकिकग्रन्थानां पूर्णज्ञानाय अत्यन्तमावश्यकं वर्तते। नैतद्विना पूर्णरूपेणार्थावगतिः, अत एव राजशेखरेणास्य वेदाङ्गत्वमुररीकृतम्।

साहित्यशास्त्रे एकत्र लोकानुरञ्जनाय समाजाय च समुचितां शिक्षां प्रदातुं लक्ष्यत्वेन काव्यरूपे गद्य-पद्य-नाटकानि विभिन्नशिक्षाप्रदाः कथाश्च विद्यन्ते, अपरत्र लक्षणरूपे काव्यस्वरूपं, काव्यप्रयोजनानि, काव्याङ्गानि, काव्यहेतुः, शब्दशक्तयः, अलङ्काराः, छन्दांसि, रसाः, गुणदोषाः इत्यादीनाञ्च विवेचनं क्रियते।

## साहित्यशास्त्रे शब्दशक्तयः

शब्दस्य प्रकृतिप्रत्ययादेरर्थबोधे सहकारिवृत्तयो हि तच्छक्तय इत्यालङ्कारिकैर्व्य-

पदिश्यन्ते। याश्च तार्किकादयो वृत्तिनाम्ना व्यवहरन्ति। त्रिविधा वाच्यलक्ष्यव्यङ्ग्यार्थाः त्रिभिश्शक्तिभिर्बोध्यास्तस्मात् तिस्रः शब्दशक्तयोऽभिधाद्या आलङ्कारिकैर्मताः।

**वाच्यार्थोऽभिधया बोध्यो लक्ष्यो लक्षणया मतः।**
**व्यङ्ग्यो व्यञ्जनया ताः स्युस्तिस्रः शब्दस्य शक्तयः**[2]।।

अपि च अस्माच्छब्दादयमर्थो बोधव्य इति ईश्वरसङ्केत एव शक्तिरिति तार्किकादिभिरुच्यते तामेवालङ्कारिका अभिधां निरूपयन्तीति नामभेदेऽपि विषयभेदाभावात् ता अभिधाद्यास्तिस्रः शब्दस्य शक्तयः इति कथने न काचिद् विप्रतिपत्तिरिति। आसु तिसृषु शक्तिषु सङ्केतितार्थस्य (कोशव्याकरणादिप्रसिद्धस्य मुख्यार्थस्य वा) स्वज्ञानेन शाब्दबोधजननाद्धेतोः प्रथमा शक्तिरभिधा वर्तते। तथा सति मुख्यार्थबोधकशक्तित्व-मभिधात्वमिति। उक्तञ्च विश्वनाथेन-**तत्र सङ्केतितार्थस्य बोधनादग्रिमाभिधा**[3] इति। शक्तिरियं मम्मटेन परिभाषिता **यत्र स मुख्योऽर्थस्तत्र मुख्यो व्यापारोऽस्या-भिधोच्यते**[4]। अर्थात्साक्षात्सङ्केतितस्य मुख्यार्थस्य विषये वाचकशब्दस्य मुख्यो व्यापारोऽभिधाशक्तिरित्युच्यते। यथा- केनचित् कञ्चिदुद्दिश्य गामानय इत्युक्ते तं गवानयनप्रवृत्तमुपलभ्य बालोऽस्य वाक्यस्य सास्नादिपिण्डानयनमर्थः प्रथमं प्रतिपद्यते, अनन्तरं च गां बधान अश्वमानय इत्यादावावापोद्वापाभ्यां गोशब्दस्य सास्नादिमानर्थः आनयनपदस्य च आहरणमर्थः इति सङ्केतमवधारयति। क्वचिच्च पूर्वमवगतस्य शब्दस्य साहचर्यात् सङ्केतमवधारयति। यथा- अत्र विकसितकमलमध्ये मधुकरः मधूनि पिबति इत्यत्र मधु करोतीति व्युत्पत्या मधुकरशब्दस्य भ्रमरे सङ्केतो मधुमक्षिकायां वेति संशये भ्रमरस्यैव कमले पूर्व मधुपानावलोकनेन कमलपदसाहचर्यात् मधुकरशब्दस्य भ्रमर एव सङ्केतमवधारयति। क्वचिच्च आप्तोपदेशादपि सङ्केतमवधारयति यथा- अयमश्व-शब्दवाच्यः इत्यादिः।

अभिधायाः ज्ञानानन्तरं बोध्यतया तदनुजत्वाद् व्यञ्जनाज्ञानात्पूर्व बोध्यतया च तदग्रजत्वात् मध्यमा शक्तिर्लक्षणेति। मुख्यार्थस्यान्वयानुपपत्तिग्रहे सति अनादिवृद्धव्यवहार-प्रसिद्धिवशात् प्रयोजनविशेषाद्वा यया शक्त्या मुख्यार्थसम्बन्धयुक्तोऽन्यो मुख्यार्थतावच्छेदका-तिरिक्तधर्मावच्छिन्नोऽर्थो बुध्यते सा लक्षणाशक्तिरिति। चाभिधेयार्थान्वयानुपपत्तिग्रहत्वे सति रूढिप्रयोजनान्यतरप्रयोज्यमुख्यार्थ-सम्बन्धवत्तदतिरिक्तार्थप्रतिपादकशक्तित्वं लक्षणात्वम्।

**मुख्यार्थबाधे तद्युक्तो ययान्योऽर्थः प्रतीयते।**
**रूढेः प्रयोजनाद्वाऽसौ लक्षणाशक्तिरर्पिता[5]।।**

**मुख्यार्थबाधे तद्योगे रूढितोऽथ प्रयोजनात्।**
**अन्योऽर्थो लक्ष्यते यत् सा लक्षणारोपिता क्रिया [6]।।**

मुख्यार्थबाधे सति तेन मुख्यार्थेन सम्बन्धोऽन्योऽर्थो (लक्ष्यार्थः) यया शक्त्या रूढिवशात् प्रयोजनवशाद्वा प्रतीयते सा लक्षणा शक्तिरिति। यथा– कलिङ्गः साहसिकः इत्यादौ कलिङ्गादिशब्दो देशविशेषादिरूपे स्वार्थेऽसम्भवन् रूढिवशाद् यया शब्दशक्त्या स्वसंयुक्तान् पुरुषादीन् प्रत्याययति, यया च गङ्गायां घोषः इत्यादौ गङ्गादिशब्दो जलमयादिरूपार्थवाचकत्वात् प्रकृतेऽसम्भवन् प्रयोजनात् स्वस्य सामीप्यादिसम्बन्धसम्बन्धिनं तटादिं बोधयति सा लक्षणेति।

इयञ्चापि लक्षणाशक्तिः लक्षणलक्षणा उपादानलक्षणेति भेदाद् द्विधा वर्तते। वर्णितञ्च काव्यप्रकाशकारेण–

**स्वसिद्धये पराक्षेपः परार्थं स्वसमर्पणम्।**
**उपादानं लक्षणं चेत्युक्ता शुद्धा सा द्विधा [7]।।**

यत्र कश्चिदपि शब्दः स्वमुख्यार्थस्य तात्पर्यसिद्धये स्वार्थमत्यजन्नपि अपरमर्थमाक्षिपति अर्थात् स्वसम्बद्धमन्यमर्थं गृह्णाति तत्र परार्थस्य ग्रहणाद् उपादानलक्षणा भवति। इयमेव वैय्याकरणैः अजहत्स्वार्थेति निगद्यते। यथा– कुन्ताः प्रविशन्ति इत्यत्र कुन्तेषु चेतनधर्मस्याभावात् ते प्रवेष्टुमसमर्थाः, अतोऽत्र मुख्यार्थस्य बाधे कुन्तशब्दः स्वार्थस्य सिद्धये स्वीयसम्बद्धं कुन्तधारिपुरुषमाक्षिपति। अतः कुन्तधारिणः पुरुषाः प्रविशन्ति इत्यर्थसिद्धावत्र उपादानलक्षणा।

यत्र शब्दोऽपरस्य अर्थस्य सिद्धये स्वीयमर्थं परित्यज्य परार्थस्योपस्थापको भवति अर्थात् अन्यार्थस्य सिद्धये स्वीयमर्थं समर्पयति तत्र लक्षणलक्षणा भवति। इयमेव शक्तिर्वैय्याकरणैः जहत्स्वार्था कथ्यते। यथा– गङ्गायां घोषः इत्यत्र गङ्गाशब्दः परार्थस्य तटरूपार्थस्य सिद्धये स्वीयं जलप्रवाहरूपं मुख्यार्थं समर्पयति।

**व्यञ्जनाशक्तिः**

व्यज्यते अनन्यलभ्यो वाच्यलक्ष्यभिन्नोऽर्थः अनया इति व्यञ्जना। मञ्जूषाकारेण इयमित्थं परिभाषिता– मुख्यार्थबाधनिरपेक्षबोधजनको मुख्यार्थसम्बद्धासम्बद्धसाधारणः प्रसिद्धाप्रसिद्धार्थविषयको वक्तादिवैशिष्ट्यज्ञानप्रतिभोद्बुद्धः संस्कारविशेषो व्यञ्जना इति।

साहित्यदर्पणकारेण व्यञ्जनाशक्तिरित्थं परिभाषिता –

**विरतास्वभिधाद्यासु ययार्थो बोध्यतेऽपरः।**
**सा शक्तिर्व्यञ्जना नाम शब्दस्यार्थादिकस्य च**[8]।।

अर्थात् अभिधा–लक्षणा–तात्पर्यात्मिका वृत्तयः यदा स्वीयं–स्वीयमर्थं बोधयित्वा निवृत्तव्यापाराः भवन्ति तदा यया वृत्त्या शक्त्या वा अभिधादिव्यतिरिक्तो भिन्नोऽर्थो बोध्यते सा शब्दस्य अर्थस्य च वृत्तिः (शक्तिः) व्यञ्जना इत्युच्यते। इत्थमेव परिभाषितं विश्वनाथेन–

**शब्दबुद्धिकर्मणां विरम्य व्यापाराभावः इति नयेनाभिधालक्षणा तात्पर्याख्यासु तिसृषु वृत्तिषु स्वं स्वमर्थं बोधयित्वोपक्षीणासु यया अपरोऽन्याऽर्थो बोध्यते सा शब्दस्यार्थस्य प्रकृतिप्रत्ययादेश्च शक्तिर्व्यञ्जनध्वननगमन प्रत्यायनादिव्यपदेशविषया व्यञ्जना नाम।**[9] यथा गङ्गायां गोषः इत्यत्र गङ्गाशब्दस्य जलप्रवाहरूपमर्थं बोधयित्वा विरतायाः अभिधायाः, तटाद्यर्थमात्रं बोधयित्वा विरतायाः लक्षणायाश्च परं यया शक्त्या शीततत्वपावनत्वादिव्यङ्ग्यार्थो बोध्यते सैव व्यञ्जना शक्तिरिति।

इयञ्च व्यञ्जनाशक्तिः शब्दस्यार्थादिकस्य च इति प्रागुक्तत्वात् शाब्दी आर्थी चेति द्विधा भवति । तत्रापि शाब्दीव्यञ्जना अभिधालक्षणामूलत्वात् द्विधा वर्तते–

**अभिधालक्षणामूला शब्दस्य व्यञ्जना द्विधा**[10]।

**अभिधामूला व्यञ्जना**

अभिधान्वयव्यतिरेकानुविधायित्वम् अभिधामूलत्वमिति। इयञ्च परिभाषिता साहित्यदर्पणकारेण –

**अनेकार्थस्य शब्दस्य संयोगाद्यैर्नियन्त्रिते।**
**एकत्रार्थेऽन्यधीहेतुर्व्यञ्जना साऽभिधाश्रया।।[11]।।**

अर्थात् एकाधिकस्थले गृहीतशक्तिकत्वाद् बह्वर्थस्य यथा– विष्णुसिंहक–पिप्रभृत्यनेकाभिधेयस्य हरिशब्दस्य एकस्मिन्नर्थे संयोगविप्रयोगप्रभृतिनियामकपदार्थैः नियन्त्रिते सति तत्तच्छब्दप्रतिपाद्यापरार्थस्य ज्ञानस्य हेतुः या व्यञ्जनाशक्तिः भवति सैव अभिधामूला व्यञ्जना इत्युच्यते। यथा– सशङ्खचक्रो हरिः इत्यत्रहरिशब्दः नानार्थको वर्तते। यथोक्तं कोषग्रन्थेषु –

**यमानिलेन्द्रचन्द्रार्कविष्णुसिंहांशुवाजिषु।**
**शुकाहिकपिभेकेषु हरिर्ना कपिले त्रिषु।।**

एवम् एषु अष्टादशसु अर्थेषु हरिशब्दस्य अर्थः विष्णुः, यमः, चन्द्रः अर्को वेति इति सन्देहे शङ्खचक्रसंयोगेन हरिशब्दो विष्णुः इत्येव अर्थमभिधत्ते , तथैव अशङ्खचक्रो हरिः इत्यत्र तद्वियोगेन तमेवार्थमभिधत्ते ।

संयोगादयश्च –

**संयोगो विप्रयोगश्च साहचर्यं विरोधिता।**
**अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः।।**

**सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः।**
**शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः।।**

साहचर्य यथा – भीमार्जुनौ इत्यत्र अर्जुनशब्दः पार्थवाचकः कार्तवीर्यवाचको वेति सन्देहे भीमस्य साहचर्याद् अत्र पार्थ इत्येवार्थः बुध्यते। विरोधितायां यथा– कर्णार्जुनौ इत्यत्र कर्णशब्दः श्रवणेन्द्रियवाचकः उत राधेय इति संशये अर्जुनेन सह बद्धवैरत्वात् कर्णः सूतपुत्रो राधेय इत्येव अर्थो व्यञ्जनयावगम्यते। अर्थयोगाद् यथा– स्थाणुं वन्दे इत्यत्र स्थाणोः शिवः शाखाग्रभागहीनतरुमूलमर्थ इति सन्देहे वन्दे इति पदप्रयोगतात्पर्यात् शिवस्यैव वन्दनीयत्वात् तरुमूलस्य तदभावात् स्थाणोः शिव इत्येवार्थः बुध्यते। एवमुक्तोदाहरणेषु संयोगादिभिः हरि–अर्जुन–कर्ण–स्थाणुशब्दाः तत्तच्छब्दानुसारम् एकैकस्मिन्नर्थेऽभिधयानियन्त्रिताः, एमेवान्यत्रापि बोध्यम्।

**लक्षणामूला व्यञ्जना**

लक्षणान्वयव्यतिरेकानुविधायित्वम् लक्षणामूलत्वमिति। इयञ्च परिभाषिता साहित्यदर्पणकारेण–

**लक्षणोपास्यते यस्य कृते तत्तु प्रयोजनम्।**
**यदा प्रत्याय्यते सा स्याद् व्यञ्जना लक्षणाश्रया** [12]।।

वाचकशब्दे सत्यपि यन्निमित्तं शब्दो हि लाक्षणिकत्वेन प्रयुज्यते तथाविधं प्रयोजनं यया वृत्त्या प्रत्याय्यते सा प्रयोजनप्रत्यायिकावृत्तिः लक्षणामूला कथ्यते। यथा– गङ्गायां घोषः इत्यत्र जलप्रवाहरूपार्थज्ञापनानन्तरं विरतायामभिधायां तटाद्यर्थबोधनाद् विरतायां लक्षणायां शैत्यपवित्रत्वाधिक्याद्यर्थः लक्षणामूलया व्यञ्जनाशक्त्या बोध्यते। ईदृशं प्रयोजनं सङ्केतितत्वाभावाद् नाभिधया, न चैतत्प्रवृत्तौ हेतुत्रयाभावात् (मुख्यार्थबाध–मुख्यार्थयोगरूढिप्रयोजनानाम्) लक्षणया बोध्यते। गङ्गाशब्दः स्वीयजलप्रवाहरूपेऽर्थे सबाध इति तद्युक्ततात्पर्योपपत्तये तटाद्यर्थं लक्षयति, तद्वद् यदि तटेऽपि सबाधः स्यात् तत्प्रयोजनञ्च लक्षयेत्। न चेह तटं मुख्योऽर्थः, नाप्यत्र बाधः, न च गङ्गाशब्दार्थस्य तटस्य पावनत्वाद्यैर्लक्षणीयैः सम्बन्धः। न हि प्रयोजने लक्ष्ये किञ्चित् प्रयोजनम्। नापि गङ्गाशब्दः तटमिव प्रयोजनं प्रतिपादयितुमसमर्थः। एवमपि प्रयोजनं चेल्लक्ष्यते तत्प्रयोजनान्तरेण तदपि प्रयोजनान्तरेण प्रकृताप्रतीतिकृदनवस्था भवेत्।

**आर्थीव्यञ्जना**

यत्र वक्तुः, श्रोतुः;वक्तृवचनस्य, अन्यसन्निधिवाच्ययोः, प्रकरणस्य, देशस्य, कालस्य काकोः (ध्वनिविकारस्य) चेष्टादिकस्य च वैशिष्ट्याद् यया शक्त्या उपस्थितार्थभिन्नोऽर्थो बोध्यते सा शक्तिः आर्थी व्यञ्जनेति कथ्यते। उक्तञ्च यथा–

**वक्तृबोद्धव्यवाक्यानामन्यसन्निधिवाच्ययोः।**
**प्रस्तावदेशकालानां काकोश्चेष्टादिकस्य च।।**

**वैशिष्ट्यादन्यमर्थं या बोधयेत्साऽर्थसम्भवा** [13]।।

एषु वक्तृवाक्यप्रस्तावदेशकालानां वैशिष्ट्यस्य उदाहरणम् –

कालो मधुः कुपित एष च पुष्पधन्वा,
धीरा वहन्ति रतिखेदहराः समीराः।
केलीवनीयमपि वञ्जुलकुञ्जमञ्जुर्दूरे
पतिः कथय किं करणीयमद्य[14]॥

अत्रैतं देशं प्रति त्वं शीघ्रं प्रच्छन्नकामुकं प्रेषय इति सखीं प्रति कयाचिद् व्यज्यते। अत्र वक्त्र्याः कामुकत्वं, वाक्यस्य रमणेच्छाबोधकत्वं, प्रकरणस्य रतिकथाप्रसङ्गः देशकालयोश्च नितान्तोद्दीपकत्वञ्च तत्तत्साधारणतो वैशिष्ट्यमिति। एवमेवान्यत्रापि बोद्धव्यकाकुचेष्टादिकानामपि बोध्यम्।

तार्किकादिभिस्तु शक्तिरियं नाङ्गीक्रियते यदुक्तं न्यायकुसुमाञ्जलौ उदयनाचार्यैः-

श्रुतान्वयादनाकाङ्क्षं न वाक्यं ह्यन्यदिच्छति।
पदार्थान्वयवैधुर्यात्तदाक्षिप्तेन सङ्गतिः॥

अर्थात् श्रुतपदानामन्वयाद् आकाङ्क्षारहितं वाक्यं वाक्यार्थभिन्नपदार्थं नेच्छति, तस्य च पदार्थान्वये अनुपपत्तिकारणात् तटादिरूपलक्षणीयार्थेन सङ्गतिर्भवति।

अत्र चिन्त्यं यत् शून्यवासगृहम् इत्यादौ न मुख्यार्थबाधो वर्तते येन तत्र लक्षणाप्रवृत्तिः स्यात्। यदि च गङ्गायां घोषः इत्यत्र प्रयोजनं लक्ष्यं स्यात् तर्हि तटस्य मुख्यार्थत्वं बाधितत्वञ्च स्यात् । तस्यापि लक्ष्यार्थत्वेन अङ्गीकारात् तस्य प्रयोजनानन्तरं स्वीकरणीयं स्यात्, पुनः तस्यापि प्रयोजनानन्तरम्। इत्थं प्रयोजनपरम्परानुसन्धाने शीतत्वपावनत्वादिरूपो लक्ष्यार्थो ह्यनवस्थादोषदूषितो भविष्यति। यदि तत्र प्रयोजनविशिष्टतीरे लक्षणाक्रियते तर्हि शैत्यादिप्रयोजनविशिष्टतीरार्थे लक्षणा न सम्भवति अतः तदपि नोचिता। यतोहि विषयप्रयोजनयोः युगपत् प्रतीत्यसम्भवात्। लक्षणाजन्यतीरज्ञानं कारणं शीतत्वादिप्रयोजनज्ञानञ्च तत्कार्यमिति, तेन च तयोः पौर्वापर्यावश्यम्भावेन यौगपद्यासम्भवादिति। यथा नीलादिसंवेदना- नन्तरमेव हि ज्ञाततायाः अनुव्यवसायस्य वा सम्भवः। एवञ्च प्रयोजनविशिष्टे लक्षणाया असम्भावात् प्रयोजनस्यापि पृथग्लक्ष्यतोऽनवस्थापातात् प्रयोजनप्रतीत्यर्थं व्यञ्जनाऽङ्गीकार्यैव इति।

अपि च अलङ्कारशास्त्रं रसप्रधानम्। न च अभिधालक्षणातात्पर्याख्या वृत्तयो

रसबोधने क्षमाः, तस्मादपि रसादीनां बोधे व्यञ्जनावृत्तिः स्वीकरणीया एव। यथोक्तं विश्वनाथेन –

**वृत्तीनां विश्रान्तेरभिधातात्पर्यलक्षणाख्यानाम्।**
**अङ्गीकार्या तुर्या वृत्तिर्बोधे रसादीनाम्** [15]।।

नैयायिकैश्चास्याः व्यञ्जनावृत्तेः अनुमाने अन्तर्भावः कल्पितः तदपि नोचितम्। यतोहि अनुमानजन्या प्रतीतिः आलङ्कारिकैः आस्वाद्यत्वेन नाभिमन्यते केवलं स्वप्रकाशमात्रविश्रान्तः सान्द्रानन्दनिर्भर एव स्वीक्रियते। तेनात्र अनुमानेन साधयितुमभीष्टात् आनन्दमयस्वप्रकाशज्ञानविषयरूपात् अर्थान्तरस्य अनुमानेन निष्पादनात् हेतोः आभासता एव। अपि च भ्रम धार्मिक विश्वस्त इत्यत्र गृहे श्वनिवृत्त्या विहितं भ्रमणं गोदावरीतीरे सिंहोपलब्धेः अभ्रमणम् अनुमापयति इति यद्वक्तव्यं तत्रानैकान्तिको हेतुः। यतोहि भीरोरपि गुरोः प्रभोर्वा आज्ञया प्रियानुरागेण वा गमनस्य सम्भवात्, कुलटायाः वचनं प्रामाणिकं न वेति सिंहसत्त्वस्य सन्देहात् हेतोः सन्दिग्धासिद्धिरिति।

इत्थं सङ्केतितार्थमात्रबोधनात् विरताया अभिधायाः मुख्यार्थबाधे तद्योगे रूढिप्रयोजनवशाच्च लक्ष्यार्थमात्रबोधनाद् विरताया लक्षणायाः परं यया शक्त्या एतद्भिन्नोऽर्थो बोध्यते यश्चार्थः रसादीनां बोधने क्षमो भवति तादृशस्य व्यङ्ग्यार्थस्य प्रतिपादिका व्यञ्जनाशक्तिरित्यालङ्कारिकैः स्वीक्रियते।

**पादटिप्पणयः**

1. काव्यमीमांसा
2. साहित्यदर्पणः 2.3
3. साहित्यदर्पणः 2.4
4. काव्यप्रकाशः 2.8
5. साहित्यदर्पणः –2.5
6. काव्यप्रकाशः–2.9

7. काव्यप्रपकाश: 2.10
8. साहित्यदर्पण: – 2.12
9. साहित्यदर्पण:– 2
10. तत्रैव 2.14
11. तत्रैव 2.13
12. तत्रैव 2.15
13. तत्रैव 2.16–17
14. तत्रैव 2
15. तत्रैव 5.1

# निर्दिश्यमानत्वनिरुक्तिः

**डॉ.गणेश्वर नाथ झा**
सहायकाचार्यः
व्याकरणविभागः
केन्द्रीयसंस्कृतविश्वविद्यालयः,
एकलव्यपरिसरः, अगरतला

प्रणिदापयति इत्यत्र **दाधा घ्वदाप्**[1] इति सूत्रेण विधीयमाना दारूपस्य घुसञ्ज्ञा दापेर्न स्यात्। अत आगमवृत्तिधर्मस्यागमविशिष्टे आरोपविधानार्थं स्वीकृता **यदागमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते**[2] इति परिभाषा। किन्तु स्वीकृतायाञ्चास्यां परिभाषायाम् उदस्थादित्यादावपि स्थावृत्तिस्थात्वस्य अड्विशिष्टे अस्थेत्यत्रारोपेन **उदः स्थास्तम्भोः पूर्वस्य**[3] इत्येतद्सूत्रघटक-स्थाशब्देनाड्वशिष्टास्थाशब्दस्यापि ग्रहणात् पूर्वसवर्णापत्तौ प्रथमोपस्थितत्वात् अकारस्य स्थाने तकारादेशापत्तिस्स्यादतोऽत्र दोषवारणाय **निर्दिश्यमानस्यादेशाः भवन्तीति**[4] परिभाषावतारिता भट्टनागेशेन। इयं परिभाषा नापूर्वा किन्तु **षष्ठी स्थाने योगेति**[5] सूत्रार्थभूतैव। तथाहि सूत्रकारमते षष्ठ्याः स्थानपदार्थानुयोगिकसम्बन्धार्थत्वसूचनाय सूत्रस्यावश्यकत्वेनावृत्या परिभाषारूपार्थलाभः। तथा चोक्तं मूले षष्ठी स्थाने योगा इति सूत्रमावर्तते तत्र **द्वितीयस्यायमर्थ इत्यादिना**[6]।

भाष्यमते तु राज्ञः पुरुषः इत्यादौ पदान्तरसमभिव्याहारात् षष्ठ्याः स्वत्वार्थकत्वस्येव इको यणचीत्यादावपि यणादि पदसमभिव्याहारादेव षष्ठ्याः स्थानार्थकत्वलाभात् षष्ठी स्थाने योगेति सूत्रं निर्दिश्यमानस्यादेशाः भवन्तीत्यर्थकमेव। तथा भाष्यमते आवृत्तेर्नोपयोगः। आवृत्तिं विनैव सूत्रे यतः सेत्यध्याहारेण यतः षष्ठी सा षष्ठीप्रकृति स्थानेन स्थानपदार्थानुयोगिकसम्बन्धेन युज्यते अर्थात् प्रतियोगितया सम्बध्यते न तु प्रतीयमानमिति। तेनेयं परिभाषा सिद्धा। प्रतीयमानं स्थानपदार्थानुयोगिकसम्बन्धप्रतियोगि न भवतीत्यस्य षष्ठीप्रकृतिजन्यद्वितीयोपस्थितिविषयताश्रयः स्थानपदार्थानुयोगिकसम्बन्धप्रतियोगी न भवतीत्यर्थस्तथा च **येन विधिस्तदन्तस्य**[7] इति सूत्रसहकारेण तदन्तस्य यदागमपरिभाषा सहकारेण सागमस्योपस्थितिर्हि स्वरूपोपस्थित्यनन्तरं द्वितीयोपस्थितिरिति। तथा च तादृशोपस्थितिविषयताश्रयस्य तदन्तस्य सागमस्य च निर्दिश्यमानत्वाभावेन स्थानित्वाभावः।

एवञ्च शास्त्रान्तरासहकारेण षष्ठीप्रकृतिजन्यविषयताश्रयत्वं निर्दिश्यमानत्वमिति फलति। परन्त्वेवं निर्दिश्यमानत्वलक्षणस्वीकारे शालीभवति मालीभवति इत्यादौ आकारस्य 'अस्य च्वौ' इति सूत्रस्थापदेनाणुदित् सवर्णस्य चाप्रत्ययः इति सूत्रसहकारेणैवोपस्थिततत्वात् निर्दिश्यमानत्वाभावेनेत्वानापत्तिः स्यादतः जातिपक्षमाश्रित्य ग्रन्थकृतायं दोषः परिहृतः। जातिपक्षे अपदस्य अत्वजात्यवच्छिन्ने शक्तत्वेनाणुदित्सूत्रस्य प्रत्याख्यानात् शास्त्रान्तरासहकारेणैव दीर्घस्याप्युपस्थितिरिति तादृशोपस्थितिविषयताश्रयस्य निर्दिश्यमानत्वेन मालीभवति शालीभवतीत्यादौ ईत्वं सिद्धयति। व्यक्तिपक्षेऽपि न भूसुधियोरिति निषेधेन ग्रहणकशास्त्रगृहीतानां निर्दिश्यमानत्वबोधनेन अस्य च्वौ इति सूत्रस्यापदेनाणुदित् सवर्णस्य चाप्रत्यय इति शास्त्रसहकारेणोपस्थिते आकारे निर्दिश्यमानत्वस्य सत्वात् तस्य स्थाने ईत्वं सिद्धम्। तथाहि भूवौ भूवः इत्यादौ सुधियौ सुधीय इत्यादौ च प्राप्तयण्निषेधार्थं न भूसुधि योरिति सूत्रारम्भः किन्तु व्यक्तिपक्षे दीर्घोकारकेकारयोः ओः सुपि इति सूत्रस्थोपदेन एरनेकाचोऽसंयोगपूर्वस्य इति सूत्रस्थपदेन ग्रहणशास्त्रसहकारेणैवोपस्थिततत्वेन अनिर्दिश्यमात्वात् यणोऽप्राप्तौ प्रसक्तमेव प्रतिषिध्यते नाप्रसक्तं इति नियमेन न भूसुधियोरिति निषेधस्य वैयर्थ्यं स्यात्। अतः निषेधारम्भादुक्तलक्षणे शास्त्रान्तरपदे ग्रहणकशास्त्रातिरिक्तत्वेन सङ्कोचः क्रियते।

तथा च ग्रहणकशास्त्रातिरिक्तशास्त्रान्तरासहकारेण षष्ठीप्रकृतिजन्योपस्थिति विषयताश्रयत्वं निर्दिश्यमानत्वमिति निष्पन्नम् किन्तु एवं निर्दिश्यमानत्वस्वीकारे पादः पद् इति सूत्रघटकपादरूपषष्ठीप्रकृत्या स्वं रूपं शब्दस्याशब्दसञ्ज्ञेति शास्त्रसहकारेणैव पाच्छब्दस्य उपस्थितित्वेन तस्यापि निर्दिश्यमानत्वानापत्तिः। एवमेव निर्गता जरा यस्मात् असौ निर्जरः तौ निर्जरसावित्यादावपि जरारूपषष्ठीप्रकृत्या स्थानिवच्छास्त्रसहकारेण एकदेशविकृत-मनन्यवदिति वा शास्त्रसहकारेण जरशब्दस्योपस्थित्या तस्यापि निर्दिश्यमानत्वानापत्तिः। एवं देवीमञ्चति देवद्र्यङित्यादौ विष्वग्देवयोरित्यत्रत्यदेवपदेन प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमिति शास्त्रमिति शास्त्रसहकारेणैव देवीशब्दस्योपस्थितिरिति तादृशोपस्थितिविषयताश्रयस्य देवीशब्दस्य निर्दिश्यमात्वाभावेन तदवयवस्य टेः स्थाने अद्र्यादेशो न स्यात्। किमः कः इत्यत्रत्यकिमपदीयनिर्दिश्यमानत्वमकज्विशिष्टक किमशब्दस्य न स्यात् तन्मध्यपतितन्यायसहकारेणोक्तपस्थितिविषयत्वादिति वदत्रोच्यते अणुदित्सूत्रा-तिरिक्तत्वस्येव स्वरूपस्थानिवत्प्रातिपदिकग्रहणे तन्मध्यपतिततिङस्त्रीणि त्रीणि

एतदतिरिक्तत्वस्यापि शास्त्रे निवेशनीयत्वेन न दोषः।

तथाहि यदि स्वं रूपं शब्दस्याशब्दसञ्ज्ञेति शास्त्रसहकारेणोपस्थितिविषयताश्रयस्य निर्दिश्यमानत्वन्न स्यात् तदा जरायाः जरसन्यतरस्यां पादः पद् इत्यादिशास्त्राणां नैरर्थक्यमतः तत्तच्छास्त्रारम्भसामर्थ्यात्स्वरूपशास्त्रेणोपस्थितिविषयस्य निर्दिश्यमानत्वं कल्प्यते। स्थानिवत्सूत्रसहकारेणोपस्थितिविषयस्य निर्दिश्यमानत्वाभावस्वीकारे तिसृणामित्यत्र सकृद्गतिन्यायेन त्रयादेशवारणपरं भाष्यमसङ्गतं स्यात्। तद्यथा स्त्रीत्वविवक्षायां त्रिशब्दादामि त्रेस्त्रयः इति सूत्रेण त्रयादेशे प्राप्ते त्रिचतुरोः स्त्रियां तिसृचतसृ इति शास्त्रेण तिस्रादेशे विहिते स्थानिवद्भावेन त्रिवृत्ति त्रित्वस्य तिस्रादेशेऽतिदेशेन पुनस्त्रयादेशः प्राप्तस्तन्निवृत्यर्थं वार्तिककृता त्रयादेशे कर्तव्ये स्त्रन्तस्य तिसृशब्दस्य स्थानिवन्न इत्यर्थकं त्रयादेशे स्त्रन्तस्य प्रतिषेधो वक्तव्यः इति वार्तिकं विरचितं तद् वार्तिकप्रत्याख्यानाय सकृदगतौ प्रतिषेधे यत्बाधितं तद्बाधितमेव इत्युक्तम् अत्र यदि स्थानिवत्सूत्रसहकारेणोपस्थितस्य निर्दिश्यमानत्वान्न स्यात् तदा स्थानिवत्भावेन त्रिवृत्तित्रित्वस्य तिस्रादेशेऽतिदेशेऽपि तिसृ इत्यस्य निर्दिश्यमानत्वाभावात् त्रयादेशस्य अप्राप्तत्वेन तद्वारणार्थं वार्त्तिकारम्भस्य वार्त्तिकप्रत्याख्यानाय भाष्यकृतः सकृद्गतिन्यायाश्रयनस्य च वैयर्थ्यं स्यात्। अतः भाष्यप्रमाणात् स्थानिवत्सूत्र-सहकारेणोपस्थितस्य निर्दिश्यमानत्वम्।

एवञ्च शास्त्रान्तरपदेन स्थानिवत्सूत्रलिङविशिष्टपरिभाषा स्वं रूपं शब्दस्याशब्द-सञ्ज्ञातिङस्त्रीणीत्यादिशास्त्रातिरिक्तशास्त्रं गृह्यते। आद्ये तिसृणामित्यत्र सकृद्गतिन्यायेन त्रयादेशवारणपरं भाष्यं मानं, द्वितीये महत्प्रियः इत्यादौ महदात्वे लिङ्गविशिष्ट-परिभाषाऽनित्यत्वपरं भाष्यं मानं, तृतीये तत्तच्छास्त्रवैयर्थ्यं, चतुर्थे रि चेति शास्त्रं मानमित्याद्यूह्यम्। किन्तु पूर्वोक्तनिर्दिश्यमानत्वलक्षणे तत्तच्छास्त्रभिन्नत्वनिवेशे गौरवं स्यादतः यदागमपरिभाषायाः येन विधिरितिशास्त्रासहकारेणोपस्थितिविषयत्वं निर्दिश्यमानत्वं वक्तव्यम्। तदुक्तमाचार्यैः अनया परिभाषया येन विधिरिति सूत्रबोधिततदन्तस्य स्थानिवत्वाभावबोधनं यदागम इति लब्धस्य च। तेन सुपद **उदस्थादित्यादिसिद्धिः**[8]।

**केचित्तु**[9] इतोऽपि लाघवानुरोधात् यत्पदघटितशास्त्रासहकारेण षष्ठीप्रकृति-जन्योपस्थितिविषयत्वं निर्दिश्यमानत्वमित्येव वक्तव्यन्तथा च यदागमपरिभाषायाः येन विधिस्तदन्तस्येति सूत्रस्य च यत्पदघटितत्वेन तच्छास्त्रसहकारेणोपस्थितिविषयस्य न निर्दिश्यमानत्वम्। यन्मध्यपतित इत्यत्र तन्मध्यपतित इत्येव पाठः स्वीक्रियते तथा च न

दोष इति वदन्ति। तन्न युक्तं, यतो हि भाष्ये यदागम इत्यस्य स्थाने अर्थवतामागमास्तद्ग्रहणेन गृह्यन्ते इत्यस्यैव पाठेन भाष्यपठितायाः परिभाषायाः यत्पदघटितत्वभावेन सङ्ग्रहो न स्यात्। तथा च उदस्थादित्यादौ दोषः स्यादतः षष्ठीप्रकृतिशक्यत्वं निर्दिश्यमानत्वमिति निर्दिश्यमानलक्षणं वक्तव्यं। येनविधिस्तदन्तस्य यदागमपरिभाषा इति शास्त्रद्वयं लक्षणाग्राहकमिति तद् बोधितस्य षष्ठीप्रकृतिशक्यत्वाभावान्न निर्दिश्यमानत्वमिति। एवं लक्षणस्वीकारे न निस्तारः यतः लिङ्गाबोधकप्रत्ययरहिते दृष्टानां प्रातिपदिकत्वतद् व्याप्यधर्माणां लिङ्गबोधकप्रत्ययविशिष्टे आरोपः प्रातिपदिकग्रहणे लिङ्गविशिष्टजस्यापि ग्रहणं इत्यनया परिभाषया क्रियते। प्रत्ययवैशिष्टञ्च स्वघटितत्वस्वनिष्ठविधेयतानिरूपितोद्देश्यताश्रयघटितत्व स्वेतराघटितत्व स्वनिष्ठविधेयतानिरूपितोद्देश्यताश्रयेतराघटितत्व एतत् सम्बन्धचतुष्टयेन।

एवञ्च वैयाकरणनिकाये शक्यतावच्छेदकारोपपदार्थस्यैव लक्षणास्वीकारेण प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमिति परिभाषायाः अपि लक्षणाग्राहकत्वमेव। तथा च यदागमपरिभाषायाः लक्षणाग्राहकत्वात् तद् बोधितस्य यथा न निर्दिश्यमानत्वं तद्वदेव एतद्बोधितस्यापि निर्दिश्यमानत्वन्न स्यात्। एवञ्च महदात्वे लिङ्गविशिष्ट-परिभाषाऽनित्यत्वपरं भाष्यमसङ्गतं स्यात्। अत षष्ठीप्रकृतिविशिष्टत्वं निर्दिश्यमानत्वम्। वैशिष्ट्यञ्च स्वजन्योपस्थितिविषयत्वस्वजन्योपस्थितिविषयसमभिव्याहृतवर्णाघटित-त्वोभयसम्बन्धेन। उदस्थादित्यादौ न दोषः। तत्र उदः स्थास्तम्भोः पूर्वस्य इति सूत्रस्थषष्ठीप्रकृतिस्थाविशिष्टः स्थाशब्दः एव तस्यैव पूर्वसवर्णः।

तत्र स्थाशब्दजन्योपस्थितिविषयताश्रयत्वं यद्यपि अस्थाशब्दस्यास्ति तथापि स्थाशब्दजन्योपस्थितिविषयः स्थाशब्दस्तत्समभिव्याहृतवर्णः अकारस्तत्घटितत्वस्यैव अस्था शब्दे सत्वेन तस्य न निर्दिश्यमानत्वं, तदघटितत्वेन च स्थाशब्दस्य निर्दिश्यमानत्वम्। तिसृणामित्यत्र च षष्ठीप्रकृतिः **त्रेस्त्रयः**[10] इति सूत्रस्था त्रिरूपा तज्जन्योपस्थितिविषयताश्रयत्वं तिसृशब्दस्य तत्समभिव्याहृत उदासीनस्तदघटितत्वस्य तिसृ इत्यत्र सत्वेन निर्दिश्यमानत्वात् प्राप्तस्त्रयादेशः सकृद्गतिन्यायेन वारितो भाष्ये इति सर्व समञ्जसम्।

नन्वेवं देवीमञ्चति देवद्रयङित्यत्र विष्वग्देवयोश्च **टेरद्र्यञ्चतावप्रत्यये**[11] इत्यनेन देवीशब्दावयवटेरद्र्यादेशौ न स्यात् अवयवषष्ठीविषयेऽपि अस्याः प्रवृत्तेः देवपदीयनिर्दिश्य-मानावयवटेरेवाञ्चतौ परे अद्रयादेशेन देवीशब्दस्य निर्दिश्यमानत्वाभावात्। यद्यपि

प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणं अनया परिभाषया देवग्रहणेन देवीशब्दस्यापि ग्रहणात् षष्ठीप्रकृतिदेवशब्दस्तज्जन्योपस्थितिविषयताश्रयत्वं देवीशब्दस्य परं स्वजन्योपस्थिति- विषयताश्रयो देवशब्दस्तत्समभिव्याहृत ईकारस्तद्घटितत्वस्यैव देवीशब्दे सत्त्वात् न तस्या निर्दिश्यमानत्वम्। न च देवीशब्दस्य निर्दिश्यमानत्वसिद्धयर्थं द्वितीयसम्बन्धघटकवर्ण स्त्रीप्रत्ययेतरत्वनिवेशः क्रियते। तथा च लक्षणस्वरूपं षष्ठीप्रकृतिविशिष्टत्वं निर्दिश्यमानत्वं वैशिष्ट्यञ्च स्वजन्योपस्थितिविषयत्वस्वजन्योपस्थितिविषयसमभिव्याहृतस्त्रीप्रत्ययेत- रवर्णाघटितत्वोभयसम्बन्धेन। तथा च लिङ्गविशिष्टपरिभाषया देवशब्देन देवीशब्दस्यापि ग्रहणात् षष्ठीप्रकृतिदेवशब्दजन्योपस्थितिविषयत्वस्य देवशब्दजन्योपस्थितिविषय- समभिव्याहृतस्त्रीप्रत्ययेतरो वर्णः उदासीनस्तदघटितत्वस्य च देवीशब्दे सत्वेन न निर्दिश्यमानात्वापत्तिरिति वाच्यमिति चेन्न।

अस्य स्त्री ई लक्ष्मीः तस्याः जरसौ ई जरसावित्यत्रापि समुदायस्य निर्दिश्यमानत्वा- पत्तिस्स्यात्। यतः जरायाः जरसन्यतरस्याम् इति सूत्रघटकषष्ठीप्रकृतिजराशब्द- जन्योपस्थितिविषयत्वस्य येन विधिस्तदन्तस्येति सूत्रसहकारेण जराशब्दान्ताङ्गे ईजरा इति समुदाये सत्वात् जराशब्दजन्योपस्थितिविषयसमभिव्याहृतस्त्रीप्रत्ययेतरोदासीनवर्णाघटितत्वस्य च सत्वात् निर्दिश्यमानत्वापत्तौ समुदायस्य जरसादेशापत्तिः स्यात्। अतः द्वितीयसम्बन्ध- घटकवर्णे स्त्रीप्रत्ययेतरत्वं विशेषणं दातुं न शक्यते इति चेदत्र ब्रूमः द्वितीयसम्बन्धस्य स्थाने स्वजन्योपस्थितिविषयताश्रयविशिष्टवर्णाघटितत्वं निवेश्यते। स्वजन्योपस्थितिविषयता- श्रयवैशिष्ट्यञ्च वर्णे स्वसमभिव्याहृतत्वस्वप्रकृतिकस्त्रीप्रत्ययेतरत्वोभयसम्बन्धेन। तथा च देवीत्यत्र स्वजन्योपस्थितिविषयताश्रयो देवस्तद्विशिष्टत्वम् ईकारस्य नास्ति यतः ईकारे स्वसमभिव्याहृतत्वस्य सत्वेन प्रथमसम्बन्धसत्वेऽपि स्वप्रकृतिकस्त्रीप्रत्ययेतरत्वाभावात् द्वितीयसम्बन्धाभावेन एकसत्वे द्वयन्नास्ति इति न्यायेनोभयसम्बन्धेन षष्ठीप्रकृतिजन्यविषय- ताश्रयविशिष्ट ईकारो न जातः, अपितु कश्चन उदासीनवर्ण एव, तद्घटितत्वस्य देवीशब्दे सत्वात् भवति तस्य निर्दिश्यमानत्वम्। ईजरसावित्यत्र चेकारस्य तद्विशिष्टत्वेन तद्घटितत्वस्य ईजरा इत्यत्र सत्वात् न दोषः।

नन्वेवमपि जरायाः जरे जराजरे, तयोः जराजरसोरित्यत्रोपस्थितिविषयताश्रयः पूर्वो जराशब्दस्तद्विशिष्ट उत्तरजराशब्दघटकः जकारस्तद्घटितत्वस्योत्तरजराशब्दे सत्वेन तस्य निर्दिश्यमानत्वाभावः। न च द्वितीयसम्बन्धस्थाने स्वजन्योपस्थितिविषयताश्रयावधिक-

पूर्ववर्णाघटितत्वसम्बन्धस्य निवेशादुत्तरस्य निर्दिश्यमानत्वमक्षतमिति वाच्यम्। त्रिशब्दादाचारक्विबन्तात् कर्तरि क्विपि तुकि आमि त्रिताम् इत्यादौ त्रेस्त्रय: इति सूत्रस्थषष्ठीप्रकृतिशब्दजन्योपस्थितिविषयताश्रयत्रिशब्दस्तदवधिकपूर्वो वर्ण उदासीनस्तद-घटितत्वं त्रिदित्यस्य वर्तते अतस्तस्य निर्दिश्यमानत्वेन त्रयादेशापत्ति:। अतोऽत्र दोषवारणार्थं षष्ठीप्रकृतिविशिष्टत्वं निर्दिश्यमानत्वं वैशिष्ट्यञ्च स्वजन्योपस्थितिविषयता-श्रयत्वस्वजन्योपस्थितिविषयताश्रयविशिष्टवर्णाघटितत्वोभयसम्बन्धेन। सम्बन्ध-घटकवैशिष्ट्यञ्च स्वावधिकपूर्वत्वस्वनिष्ठोद्देश्यतानिरूपितावयवत्वाच्छिन्नविधेयता-श्रयत्वैतदन्यतरसम्बन्धेन। जरजरसौ निर्जरसावित्यादौ समुदायस्य, व्याघ्रपात्पद इत्यादौ पूर्वपाच्छब्दस्य निर्दिश्यमानत्वाभावाय स्वावधिकपूर्वत्वेतिप्रथमसम्बन्धनिवेश:। त्रितामित्यादौ समुदायस्य निर्दिश्यमानत्वाभावाय स्वनिष्ठोद्देश्यतानिरूपितावयवत्वावच्छिन्नविधेयताश्रयत्व-रूपद्वितीयसम्बन्धनिवेश:।

नन्वेवमपि प्रतिषिञ्चतीत्यादौ नुम्विशिष्टस्य तन्मध्यपतितस्तद्ग्रहणेन गृह्यते इति न्यायेन सिच्त्वेऽपि सिच्निष्ठोद्देश्यतानिरूपितावयवत्वावच्छिन्नविधेयताश्रयो नुम् तद् घटितत्वेन सिञ्च् इत्यस्य निर्दिश्यमान्त्वाभावात् उपसर्गान्निमित्तादेषां सस्य ष: स्यादित्यर्थकेन **उपसर्गात् सुनोति सुवतिस्यति स्तौतिस्भोभतिस्थासेनयसेधसिञ्चस्वञ्जाम्**[12] इति सूत्रेण षत्वन्न स्यात् इति चेन्न अन्यतरसम्बन्धघटकद्वितीयसम्बन्धस्य स्थाने स्वसमभिव्याहृतत्वस्व-निष्ठोद्देश्यतानिरूपितावयवत्वावच्छिन्नविधेयताश्रयत्वैतदुभय स्वविशिष्टत्वनिवेशनीयत्वान्न दोष:। नुम: सिच्समभिव्याहृतत्वविरहात् पूर्वपरयोरेव समभिव्याहृतपदार्थत्वादिति चेत्।

मैवं यत: व्याघ्रपद: सुपद: इति समुदाये उपस्थितिविषयताश्रयपरपाच्छब्दाव-धिकपूर्ववर्णघटितत्वेन निर्दिश्यमानत्वाभावात् पाद: पत् इति सूत्रेण पदादेशाभावापत्त्या अव्यवहितपूर्वत्वं सम्बन्धघटकं वक्तव्यम्। तथा च न स्नात्वा अस्नात्वा, अस्नात्वा कालक, स्नात्वाकालकं कृत्वा इति स्नात्वाकालकीकृत्य इत्यत्र मयूरव्यंसकादित्वात् स्नात्वाकालक इत्यत्र समास: पश्चात् च्व्यन्तस्य गतित्वात् **कुगतिप्रादय:**[13] इति सूत्रेण स्नात्वाकालकीत्यस्य कृत्वेत्यनेन गतिसमासे परस्य क्त्व: स्थाने ल्यबादेशे स्नात्वाकालकीकृत्येति रूपं सिद्ध्यति। अत्र पूर्वक्त्वाप्रत्ययस्यापि निर्दिश्यमानत्वेन समासेऽनञ्पूर्वोक्त्वोल्यप् इति सूत्रेण ल्यबादेशापत्ति:। यत: समासेऽनञ्पूर्वेत्यत्र क्त्वाशब्दजन्योपस्थितिविषयताश्रयत्वमपि पूर्वक्त्वाशब्दस्याति, स्वजन्योपस्थितिविषयताश्रय:

परः क्त्वाशब्दः तदव्यवहितपूर्ववर्णः कृधातुघटक ऋकारस्तदघटितत्वमपि पूर्वस्य क्त्वः अस्ति अतः तस्य निर्दिश्यमानत्वेन ल्यबादेशापत्तिः।

ननु स्नात्वाकालक इत्यादौ ल्यपोऽभावाय समासेऽनञ् पूर्वेक्त्वो ल्यप् इति सूत्रभाष्ये वार्तिककृता **स्नात्वाकालकादीनामप्रतिषेधो वक्तव्यः**[14] इति वार्तिकं विरचितमनेनैव वार्तिकेन स्नात्वाकालकीकृत्येत्यस्य निर्दिश्यमानत्वापत्तेर्वारणं भविष्यति। यतः स्नात्वाकालक इत्यस्य समासान्तरघटकत्वेऽपि स्नात्वाकालकत्वाविशेषादिति चेन्न भगवता भाष्यकृता वार्तिकप्रत्याख्यानाय समासेऽनञ् इति सूत्रस्य अनञ्पूर्वपदकस्य क्त्वान्तसमासस्य ल्यबित्यर्थः स्वीकृतः अत एव स्नात्वाकालकादीनां प्रतिषेधो वक्तव्यः इत्युक्त्वा **तदन्तनिर्देशात् सिद्धम्**[15] इत्युक्तम्। तथा च वार्तिकप्रत्याख्यानपक्षे पूर्वक्त्वाशब्दस्यापि ल्यबापत्तिः। क्त्वान्तस्यसमासावयवक्त्वान्तपदीयनिर्दिश्यमानस्य ल्यबित्यर्थात्। अतः स्नात्वाकालकीकृत्यपदघटक- पूर्वक्त्वापदस्य निर्दिश्यमानत्वापत्तिरस्त्येवेति चेदत्रोच्यते वार्त्तिकारम्भपक्षे वार्त्तिकप्रत्याख्यानपक्षे ल्यबापत्तिरस्त्येव अतः फलैक्ये प्रत्याख्यानं न तु फलभेदे इति नियमात् आरम्भप्रत्याख्यानयोः फलभेदाभावाय स्नात्वाकालकीकृत्य इदानीनामनभिधानमेव कल्प्यते। किञ्च **मयूरव्यंसकादयश्च**[16] इति सूत्रेण समासार्थ स्नात्वाकालक इत्यादीनां निपातनम् अवश्यं कर्तव्यं तेनैव ल्यबाभावोऽपि सिद्धयति।

यत्तु मयूरव्यंसकादयश्चेति चकारेणैतद्विहितसमाससञ्ज्ञकानां समासान्तरे प्रवेशो न भवतीति ज्ञाप्यते अत एव परमाश्च ते मयूरव्यंसकाः इति वाक्यमेव एवञ्च स्नात्वाकालकः इत्यस्यापि एतत्सूत्रेणैव समाससञ्ज्ञायाः विहितत्वात् तस्य समासान्तरे अप्रवेशात् स्नात्वाकालकघटितसमासस्यासाधुत्वान्नैतत्प्रयोगः इति चेन्न ज्ञापकसाजात्यात् मयूरव्यं- सकादश्चेति सूत्रेण विहितसमाससञ्ज्ञकानां कर्मधारये एव प्रवेशो न भवति तेन परमाश्च ते मयूरकव्यंसका इति वाक्यमेवेति भाष्याद्युक्तं सङ्गच्छते। अत एव **प्रत्ययमात्रग्रहणे**[17] इति शेखरकारादीनां **चक्षुर्मात्रग्राह्यो गुणः रूपम्** इति तर्कसङ्ग्रहकारस्य प्रयोग उपपद्यते। तथा च स्नात्वाकालक इत्यस्य मयूरव्यंसकादयश्चेति सूत्रेण विहितस्य समाससञ्ज्ञकस्य स्नात्वाकालकीकृत्येति गतिसमासे प्रवेशो बाधकाभावेन पूर्वक्त्वाशब्दस्य ल्यप्प्रत्ययः प्राप्त एव अतस्तद् वारणाय यत्नो कर्तव्य एव। किञ्च स्नात्वाकालकी- कृत्येत्यादीनामनभिधानत्वं न कल्प्यते तदा षष्ठीप्रकृतिविशिष्टत्वं निर्दिश्यमानत्वं वैशिष्ट्यञ्च स्वजन्योपस्थितिविषयत्वस्वप्रयोज्यशाब्दबोधीयविषयताविशिष्टवर्णाघटितत्वोभयसम्बन्धेन।

विषयवैशिष्ट्यञ्च वर्णे स्वानाश्रयत्वस्वाश्रयसमभिव्याहृतत्वोभयसम्बन्धेन। स्नात्वाकाल-कीकृत्येत्यत्र क्त्वान्तसमासस्य ल्यबित्यर्थे क्त्वापदीयशाब्दबोधविषयतायाः समासान्ते क्त्वाशब्दे एव सत्वेन विषयतानाश्रयत्वस्य तदाश्रयसमभिव्याहृतत्वस्य च पूर्वक्त्वाप्रत्ययघटके वर्णे सत्वेन तद्घटितत्वस्यैव पूर्वस्मिन् क्त्वाशब्दे सत्वेन न पूर्वस्य निर्दिश्यमानत्वम्। व्याघ्रपादः सुपद इत्यत्र पादः पद् इति सूत्रघटकपाच्छब्दप्रयोज्यशाब्दबोधीयविषयतायाः एकस्या एव उभयत्र सत्वेन स्वानाश्रयत्वस्य पाच्छब्दावयवेऽभावेन उभयत्र निर्दिश्यमात्वोपपत्तिर-वच्छेदकभेदेनैव विषयतायाः भेदात्। अत एव सजुषस्सजुषो सजूस्सजुषौ ताभ्यां सजूस्सजूर्भ्यामित्यत्र उभयत्र निर्दिश्यमानत्वसिद्धिः। ससजुषोरित्यस्य सजुश्शब्दान्तपदस्य रुरित्यर्थेन पदनिष्ठविशेष्यतानिरूपितायाः सजुश्शब्दत्वावच्छिन्नायाः शाब्दीयविषयाताः एकस्या एवोभयत्र सत्वादवच्छेकस्योभयत्रैकस्यैव सत्वेन विषयताभेदे मानाभावात्।

न चापिबदित्यत्रार्थवत्वावच्छिन्नायाः विषयतायाः सङ्कुचितायाः पात्वावच्छिन्न-विषयतायाः आगमसमभिव्याहारे आगमविशिष्टस्यैवार्थवत्वमिति नियमात् आगमविशिष्टे एव सत्वं न तु तद्रहिते, तस्यानर्थकत्वात् ततश्च शाब्दबोधविषयताविशिष्टोऽकारो न भविष्यति अपितूदासीन एव। तथा च तादृशविषयताविशिष्टोदासीनवर्णाघटितत्वेन उपस्थितिविषयताश्रयत्वेन च विशिष्टस्य अपा इत्यस्य निर्दिश्यमानत्वापत्तिरेवागमस्थले सर्वत्र बोध्यम् इति वाच्यम् इति चेन्न स्वजन्योपस्थितिविषयताश्रयनिष्ठोद्देश्यतानिरूपितावय-वत्वाच्छिन्नविधेयताश्रयाघटितत्वरूपतृतीयसम्बन्धस्यापि निवेशेनादोषात्। न वा प्रतिसिञ्चतीत्यादौ तादृशविधेयताश्रयनुम्घटितत्वेन दोषावसरः, तादृशोपस्थितिविषयताश्रय-विशिष्टवर्णाघटितत्वस्य विवक्षितत्वात्। वैशिष्ट्यञ्च स्वसमभिव्याहृतत्वस्वनिष्ठोद्देश्यता-निरूपितावयवत्वावच्छिन्नविधेयताश्रयत्वोभयसम्बन्धेन। प्रतिसिञ्चतीत्यादौ नुमस्समभिव्य-हाराभावान्न दोषः।

## सन्दर्भग्रन्थसूची


1. पाणिनिसूत्रम् 1-1-20 सिद्धान्तकौमुदी, पृष्ठ 209, प्रकाशकः मोतीलाल बनारसीदास, संस्करण 2006।

2. परिभाषेन्दुशेखरः परिभाषासंख्या 11 पृष्ठ 48,प्रकाशकः वासुदेवबालकृष्ण पटवर्धन, राजराजेश्वरीप्रेस पुस्तकालय दुर्गाघाट वाराणसी।

3. पाणिनिसूत्रम् 8-4-61, सिद्धान्तकौमुदी, पृष्ठ 127, प्रकाशकः मोतीलाल बनारसीदास, संस्करण 2004।

4. परिभाषेन्दुशेखरः परिभाषासंख्या 12, पृष्ठ 60, प्रकाशकः वासुदेव-बालकृष्ण पटवर्धन राजराजेश्वरीप्रेस पुस्तकालय, दुर्गाघाट वाराणसी।

5. पाणिनिसूत्रम् 1-1-49, सिद्धान्तकौमुदी पृष्ठ 43, प्रकाशकः मोतीलाल बनारसीदास, संस्करण 2004।

6. परिभाषेन्दुशेखरः परिभाषासंख्या 12, पृष्ठ 60, प्रकाशकः वासुदेव बालकृष्ण पटवर्धन, राजराजेश्वरीप्रेस पुस्तकालय दुर्गाघाट वाराणसी।

7. पाणिनिसूत्रम्, 1-1-72

8. परिभाषेन्दुशेखरः परिभाषासंख्या 12, पृष्ठ 63, प्रकाशकः वासुदेव बालकृष्ण पटवर्धन राजराजेश्वरी प्रेस पुस्तकालय दुर्गाघाट वाराणसी।

9. परिभाषेन्दुशेखरः परिभाषासंख्या 12, पृष्ठ 61, प्रकाशकः वासुदेव बालकृष्ण पटवर्धन राजराजेश्वरी प्रेस पुस्तकालय दुर्गाघाट वाराणसी।

10. पाणिनिसूत्रम् 7-1-53, सिद्धान्तकौमुदी पृष्ठ 91, प्रकाशकः मोतीलाल बनारसीदास, संस्करण 2006।

11. पाणिनिसूत्रम्, 6-3-96

12. पाणिनिसूत्रम्, 8-3-65

13. पाणिनिसूत्रम्, 2-2-18

14. महाभाष्यम्।

15. महाभाष्यम्।

16. पाणिनिसूत्रम् 2-1-72, सिद्धान्तकौमुदी पृष्ठ 85, प्रकाशकः मोतीलाल बनारसीदास, संस्करण 2010।

17. परिभाषेन्दुशेखरः परिभाषासंख्या 23, पृष्ठ 104, प्रकाशकः वासुदेव-बालकृष्ण पटवर्धन राजराजेश्वरीप्रेस पुस्तकालय दुर्गाघाट वाराणसी

# वेदान्तग्रन्थेषु नैयायिकाभिमतस्य ईश्वरानुमानस्य विमर्शः

**वि. महेश्वरः**
सहायकाचार्यः अद्वैतवेदान्तविभागः
मद्रपुरी संस्कृतादर्शमहाविद्यालयः
चेन्नै

शारीरकमीमांसायां जन्माद्यधिकरणे शास्त्रयोनित्वाधिकरणे च भाष्यतद्व्याख्यानेषु नैयायिकाभिमतस्य ईश्वरानुमानस्य विमर्शो दृश्यते। जगतः सृष्टिस्थितिसंहर्ता ईश्वरः श्रुत्यैकवेद्यो नानुमानप्रमाणक इति तन्मतम्। तदत्र निरूप्यते।

## ईश्वरानुमानम्

''**क्षित्यङ्कुरादिकं सकर्तृकं कार्यत्वात् घटवत्**'' इति प्राचीनाः अनुमानप्रयोगं दर्शयन्ति। तत्र सकर्तृकत्वं साध्यं कार्यत्वं हेतुः। घटादिषु कार्यत्वं सकर्तृकत्वञ्चास्तीति समन्वयः। व्याप्तिबलात् क्षित्यङ्कुरादिषु सकर्तकृत्वे सिद्धे तत्र अस्मदादिकर्तृकत्वं बाधितमिति, विलक्षणः कश्चित् चेतनः सिद्ध्यति। स च भवति ईश्वर इति अनुमानेन ईश्वरसिद्धिः। तत्र क्षित्यङ्कुरादिकमिति शब्देन जन्यमात्रं पक्षः उपस्थाप्यते। सकर्तृकत्वं नाम कृतिमज्जन्यत्वम्। तदपेक्षया कृतिजन्यत्वस्य लाघवात् ''कृतिजन्यम्'' इति साध्यं निर्देष्टव्यम्। स्वरूपसम्बन्धविशेषरूपं जन्यत्वं पक्षतावच्छेदकम्। प्रागभावप्रतियोगित्वरूपं जन्यत्वं हेतुरिति न तयोरैक्यम्। ''सिद्ध्यतो धर्मस्य नित्यत्वे एकत्वे च लाघवमिति लाघवज्ञानात्मकेन कृतिजन्यत्वव्याप्यकार्यत्ववज्जन्यमिति समूहालम्बनपरामर्शेन जायमानायामनुमितौ नित्या एका कृतिः विषयी भवति। सा च परिशेषानुमानेन अस्मद्विलक्षणात्माश्रिता साध्यते चेत् ईश्वरः साधितो भवतीति वदन्ति।

## विमर्शः

''यद्यत्कार्यं तत् कर्तृजन्य'' मिति व्याप्तिः लाघवज्ञानसहकारेणापि सिषाधयिषितम् ईश्वरस्वरूपं न साधयिष्यति। तत्प्रतिकूलानाम् अन्यासामपि व्याप्तीनां जागरूकत्वात्। तथा हि, यद्यत् जीवभिन्नं तदचेतनम् इति, यद्यत् ज्ञानं तन्मनोजन्यमिति, यो यः कर्ता स शरीरवान् इति, या या प्रेक्षावत्प्रवृत्तिः सा फलेच्छापूर्विका इति, या या कृतिः सा अनित्या

इति, स्वसमानाधिकरणद्वितीयसहिता इति च सन्त्यनेकाः व्याप्तयः अव्यभिचरिताः। एतासां व्याप्तीनां ईश्वरं, तदीयज्ञानेच्छादिकं वा विहाय नान्यदस्ति व्यभिचारनिरूपकमधिकरणम्। अतः ईश्वरानुमितेः पूर्वं तत्प्रतिकूलव्याप्तिनिश्चयैः प्रतिबद्धत्वात् निरङ्कुशमीश्वरस्वरूपं सिद्ध्येत्।

लाघवज्ञानसहकृतपरामर्शात् कृतौ एकत्वसिद्धिरित्यपि न युक्तम्। न हि वह्निव्याप्यधूमवान् पर्वतः इति परामर्शदशायाम् ''सिद्धयतो वह्नेः महानसीयत्वे लाघ'' मिति ज्ञानात् पर्वतो महानसीयवह्निमान् इति अनुमितिः प्रमात्मिका सम्भवति बाधितत्वात्। अतः प्रमाणान्तरेण बाधाभावे सत्येव लाघवज्ञानं प्रमाणसहकारि भवितुमर्हति। यत्तु रामरुद्रायां सिद्धयतो वह्नेः महानसीयत्वे लाघवमिति लाघवज्ञानसहकृतपरामर्शेन पर्वतो महानसीयवह्निमानित्यनुमितिः असति बाधकानुसन्धाने जायते इति ईश्वरानुमानस्य दष्टान्तः उपन्यस्तः सः उक्तस्थले तादृशं ज्ञानं जायते इत्येतावन्मात्रे दृष्टान्ततया। न तु दृष्टान्तीकृता अनुमितिरपि प्रमा इत्यभिप्रायेण इति बोध्यम्। प्रकृते च महतः प्रासादादेः बहुकर्तृकत्वस्य दर्शनात् दृष्टविरुद्धं लाघवज्ञानमकिञ्चित्करम्। असति बाधकानुसन्धाने एव तादृशानुमित्युदयात्।

**परिमलकारोद्भावितः विमर्शविशेषः**

यदुक्तं लाघवज्ञानसहकृतः परामर्शः कृतावेकत्वं नित्यत्वञ्च भासयिष्यतीति तन्न। कृतौ भासमानम् एकत्वं हि एकत्वसंख्यारूपं चेत् न कश्चिल्लाभः ईश्वरसाधने अनुपयोगात्। किन्तु स्वसमानाधिकरणस्वसजातीयद्वितीयरहितत्वरूपेण एकत्वेन विशिष्टायाः कृतेः सिद्धौ तया ईश्वरः सिद्ध्येत्। एतदर्थं एतादृशस्य एकत्वस्य कृतौ प्रकारतायां, अनुमितौ अधिकविषयप्रवेशकृतं गौरवमापद्यते। तथा सति एतादृशस्य एकत्वस्य कृतौ प्रकारतया भानं प्रति प्रयोजकीभूतं लाघवज्ञानं स्वजन्यफले गौरवापादकत्वादेव कथं वा प्रमाणसहकारि भवेत् इति परिमलकाराः आक्षिपन्ति।

तेषामयमाशयः। लोके हि स्वजन्यफले लाघवापादकं यत् तस्यैव करणसहकारिता इष्यते। न तु गौरवापादकस्य। प्रकृते यदीदं लाघवज्ञानं परामर्शकाले न स्यात् तर्हि अनुमितिः कृतिमात्रविषयिणी, अत एव विषयतो लघुभूता जनिष्यते। यदि तु लाघवज्ञानं परामर्शकाले अस्ति तर्हि ततो जायमाना अनुमितिः नित्यैककृत्यवगाहिनी विषयतो गुरूभूता जनिष्यते। अस्यां स्थितौ अनुमित्यात्मकज्ञानकरणेन परामर्शेन स्वजन्यप्रमायां गौरवापादकं

लाघवज्ञानं तर्को वा न स्वसहकारितया गृह्येत इति।

ननु यद्यपि तदात्वे ज्ञानं विषयतो गुरुभूतमेव जन्येत तथापि साधितायां कृतौ वस्तुकृतं लाघवं तु अस्त्येव। तद्ध्वंसप्रागभावाद्यनेककल्पनाया: अकर्तव्यत्वात्। एवञ्च वस्तुकृतलाघवपर्यालोचनया ज्ञाने विषयकृतं गौरवं सोढव्यमित्यपि न वाच्यम्।

एवं सति किम् अनुमानेन सिद्ध्यद्वस्तुस्वरूपकृतलाघवलोभेन अनुमितौ विषयकृतगौरवं सोढव्यम् उत, अनुमितौ विषयकृतलाघवलोभेन वस्तुस्वरूपसम्बन्ध्यधिकल्पनागौरवं सोढव्यमिति निर्णेतव्यम्।

अत्रैतत्पश्याम:। एतत्तुल्ये शाब्दसन्दर्भे ''निषादस्य पतिं याजये'' दित्यत्र मीमांसकै: (प्रकारान्तरेण वाक्यतात्पर्यनिर्णयासम्भवे) शाब्दसामग्र्यां लाक्षणिकोपस्थितिकृतं गौरवमसहमानै: वाक्यतात्पर्येण अत्रैवर्णिकस्य निषादस्य पतेरपि यागप्रयोगमङ्गीकृत्य, तदपेक्षितवेदाध्ययनाद्यनेककल्पनं प्रामाणिकमित्यभ्युपगतम्। कुत: । विनिगमनाविरहे शाब्दसामग्र्या: लाघवस्यैव पुरस्फूर्तिकस्य रक्षणीयत्वात्। मानाधीनत्वान्मेयसिद्धे:। प्रमाणानां स्वरसत प्रवृत्तौ पुरुषस्य हस्तप्रक्षेपे अनुमन्यमाने, प्रमाया: पुरुषतन्त्रत्वापत्ते:। एवमेव प्रमाया: स्वविषयशूरत्वात् वस्तुसाधकत्वं सर्वैरिष्यते। तत: सिद्ध्यतो वस्तुन: स्वरूपविशेषप्रयुक्तं किमपि कल्पनीयं यद्यापतति पश्चात् तर्हि तत्प्रकल्प्यापि प्रमाणप्रवृत्तौ लाघवं सम्पादनीयम्। प्रमास्वरूपेऽपि तथैवेति स्थिति:। न चैतावता निषादस्यपत्यधिकरणन्यायेन लाक्षणिकस्थलोच्छेदापत्ति:। विनिगमनाविरहस्थले एव एतादृशस्य लाघवगौरवविचारस्य अवतारणीयत्वात्। सम्प्रतिपन्नलाक्षणिकस्थले लक्षणातात्पर्यग्राहकस्य नियमेन सम्भवात् तस्यैव तत्र विनिगमनात्वात् न पुनर्लाघवगौरवविचारापेक्षा। निषादस्यपतिवाक्ये तु न किमपि षष्ठीतत्पुरुषसमासतात्पर्यग्राहकमस्ति। निषादीयवेदाध्ययनादिकल्पनागौरवं तु वस्तुकृतगौरवापरपर्यायं न लक्षणातात्पर्यग्राहकमित्युक्तम्।

तुल्या चैतदनुमानस्थलेऽपि स्थितिरित्यत: अत्रापि वस्तुकृतं गौरवमेव सोढव्यमित्यापातात् नित्यत्वैकत्वविशिष्टकृति: अनुमानेन न सिद्ध्येत्।

न च एवं सति लाघवज्ञानं कुत्रापि परामर्शसहकारि न भवेदिति वाच्यम्। यत्र अनुमितौ अधिकविषयावगाहनकृतं गौरवं न भवति, तत्र लाघवज्ञानसहकारस्य इष्यमाणत्वात्। यथा अद्वैतिनां जगन्मिथ्यात्वानुमाने परामर्शसहकारी अस्ति लाघवतर्क: ''यदि जगत: सद्रूपे ब्रह्मणि अध्यस्तत्वरूपं मिथ्यात्वं सिद्ध्येत् तर्हि एकेनैव सर्वानुगतेन आरोपिततादात्म्येन

भासमान–अधिष्ठानगतसद्रूपेण सर्वत्र एकरूपसत्वप्रकारकप्रतीत्युपपत्तौ सन् घट इति प्रतीतिनिर्वाहाय घटपटादिषु अनन्तसत्स्वरूपत्वकल्पना नापेक्षिता स्यात्'' इति। अत्र नानेन परामर्शसहकारिणा तर्केण अनुमितावधिकविषयप्रवेशापत्तिरस्ति। यद्यस्ति तर्हि अनुपयुक्तमेव तत्। एतेन द्रव्यत्वादिजातिसाधकान्यपि अनुमानानि परास्तानि। तथा च यत् अग्रे वस्तुलाघवपर्यवसितं स्वानुग्राह्यप्रमाणजन्यज्ञानस्य विषयगौरवमापादयति तत् लाघवं प्रमाणसहकारितया नेष्यते इति तत्वम्। नो चेत् प्रामाणिकैः मणिकारादिभिः कृतं प्राभाकरखण्डनम् अयुक्तमापद्येत। तथाहि।

पुरोवर्तिविषयकं ज्ञानं पुरोवर्तिविषये इष्टभेदग्रहदशायां प्रवर्तकं न भवतीति सर्वसम्मतम्। तत्र प्रवृत्तिकारणं तादृशप्रतिबन्धव्यावृत्तं किञ्चिदनुमेयम्।

तथा च प्रयोगः ''पुरोवर्तिविषयकप्रवृत्तिः इष्टभेदग्रहविरोधिकिञ्चित्कारणजन्या'' इष्टभेदग्रहप्रतिबध्यत्वात् इति। परन्तु अनेन प्रयोगेन तादृशकारणत्वेन इष्टभेदाग्रहो वा सिद्ध्येत् इष्टाभेदग्रहो वा सिद्ध्येत्। तत्र विनिगमनाविरहे प्राभाकरः इष्टभेदाग्रहसिद्धिमिच्छति। तत्सिद्धौ वस्तुकृतलाघव–सम्भवात्। सर्वत्र इष्टभेदाग्रहमात्रेण प्रवृत्तिसिद्धौ भ्रमस्य अकल्पनीयत्वात्, तदकल्पनप्रयुक्तं लाघवमस्ति इति तस्य हृदयम्। एवं ब्रुवन् प्राभाकरः खण्डनीयश्चेत्, एतादृशलाघवतर्केण जायमानायामनुमितौ विषयकृतं गौरवं भविष्यति, अभेदस्य तद्व्यक्तिरूपत्वेन इष्टाभेदग्रहापेक्षया इष्टप्रतियोगिकभेदविषयकग्रहाभावरूपपदार्थस्य अनुमितिविषयतायां गौरवात् वस्तुसाधकज्ञाने विषयकृतगौरवस्य अग्रे पर्यवस्यद्वस्तुलाघवापेक्षया ज्यायस्त्वमेव इति खण्डनीयः। खण्डितञ्च तयैवेति स्थितिः।

चेदेवं, तुल्यमीश्वरानुमानेऽपीति न विस्मर्तव्यम्। अतः न कृतिविशेषणतया नित्यत्वैकत्वभानसम्भवः।

प्रकारतया वा नित्यत्वैकत्वयोः कृत्यंशे अनुमितौ भानं विना न भवतामिष्टसिद्धिः। तथा च सामग्र्यामपि गौरवमङ्गीकृतं भवति तादृशलाघवज्ञानस्य सामग्र्यां प्रवेशनीयत्वात्। तदपि निषादस्यपत्यधिकरणन्यायविरुद्धमेव। नित्यत्वैकत्वयोः अग्रे जायमानमानसज्ञान–विषयत्वस्वीकारेऽपि लाघवज्ञाने तत्प्रयोजकता कल्पनीया इति पुनः गौरवम्।

ननु मिथ्यात्वानुमितिजनकपरामर्शसहकारिणः प्रागुपन्यस्तलाघवतर्कस्य का गतिरिति चेत् न। तस्य परामर्शसहकारित्वे न किञ्चिद्बाधकम्। ''विमतं मिथ्या'' इत्यनुमितौ

कयापि विधया अधिकविषयकत्वस्य लाघवज्ञानेन अनासञ्जनात् इति बोध्यम्।

**ईश्वरानुमानस्य उपयोगः**

ननु ईश्वरानुमानं निष्फलमित्यापतितम्। न चेष्टापत्तिः। **''श्रुत्यर्थदाढ्र्याय अविरोधिप्रमाणं भवत् अनुमानमपि न निवार्यते''** इति जन्माद्यधिकरणभाष्ये अनुमानस्यापि भाष्यकारैः अनुमोदनात् इति चेत् उच्यते।

न वयमेतावता ईश्वरानुमाननैष्फल्यं ब्रूमः। किन्तु अप्रामाण्यज्ञानानास्कन्दितेश्वरस्वरूपसाधकतां वारयामः। ईश्वरे सम्भावनाजनकतया अनुमानमपि ईश्वरस्वरूपप्रतिपादकश्रुतेः उपपत्तिविधया ईश्वरतात्पर्यकत्वनिर्णयाय उपयुज्यते एव। इदमेव भाष्योक्तं श्रुत्यर्थदाढ्र्यार्थत्वमनुमानस्य। ''यद्यत् जन्यं, तत् सकर्तृकमिति व्याप्तौ व्यभिचारानुपलम्भात् जगतोऽपि सकर्तृकत्वं शक्यमेव निश्चेतुम्। न च तावता ईश्वरसिद्धिः। कर्तुरेकत्वाद्यंशे हेतोरुदासीनत्वात्। लाघवज्ञानस्य अकिञ्चित्करत्वस्य साधितत्वात्। परिशेषानुमानादपि अस्मदादिवैलक्षण्यमात्रसिद्धिः। तस्मात् ईश्वरस्वरूपं श्रुत्यैव प्रमातव्यम्। अनुमानसिद्धेन सकर्तृकत्वेन गिरिसमुद्रादेः स्वभावसिद्धत्ववादिचार्वाकपक्षनिरासेन निष्कण्टकीकृते मार्गे प्रविशन्ती श्रुतिः द्रागिव ईश्वरस्वरूपं गमयतीति नैयायिकानां जगतः सकर्तृकत्वानुमानम् अत्यन्तमुपयुज्यते एवेत्यवधेयम्।

# भूवादयो धातवः

**वि. मनीष शर्मा**
व्याकरणप्राध्यापकः
श्रीरामसंस्कृतमहाविद्यालयः
चित्रकूटम्, मध्यप्रदेशः

भगवता पाणिनिना विरचितेन च व्याकरणशास्त्रेण प्रकृतिप्रत्ययविभागद्वारा प्रकृत्यर्थप्रत्ययार्थविवेचनद्वारा वा शब्दानां साधुत्वं प्रतिपाद्यते। तदुक्तं भर्तृहरिणा **शब्दसाधुत्वविषया सैषा व्याकरणस्मृतिः।** अत्र प्रायः सर्वे शब्दाः धातुभ्य एव निष्पन्नाः भवन्ति। तदुक्तं शाकटायनेन **सर्वं नाम धातुजमाह।**[1] तत्र यद्यपि धातुपदार्थः दर्शनान्तरेषु पृथक् पृथक् परिभाषितस्तथापि व्याकरणशास्त्रे कोऽयं धातुपदार्थ इत्याकाङ्क्षायां भगवता पाणिनिना **भूवादयो धातवः** इति सूत्रं विरचितमेतद् सूत्रविषये भगवता भाष्यकृता पतञ्जलिना त्रयः पक्षाः महाभाष्ये प्रकल्पितास्तेषु अन्यतमः पक्षः भूश्च वाश्च इति भूवौ आदिश्च आदिश्च इति आदी भूवौ आदी येषां ते भूवादयः।

अमुमेव पक्षमाश्रित्य भट्टोजिदीक्षितेन सिद्धान्तकौमुद्यां प्रौढमनोरमायाञ्च अदः सूत्रं व्याख्यातम्। किन्तु भवत्ययं सन्देहः यद् भूश्च वाश्च इति भूवौ अत्र द्वन्द्वसमासः स्वीकृतः। किन्तु एकधर्मावच्छिन्नस्य एकधर्मावच्छिन्नसंसर्गेण एकधर्मावच्छिन्ने अन्वयः सह विवक्षा। तस्याः सत्वे एव द्वन्द्वो भवति। अत एव भगवता भाष्यकृता महाभाष्ये समुच्चयान्वाच्ययोरनेकस्य पदस्य च अर्थवृत्तित्वाभावाद् द्वन्द्वाभावः उक्तः। तत्सङ्गच्छते तेन भिक्षामट, गां चानय, ईश्वरं गुरुञ्च भजस्व इत्यादौ न द्वन्द्व इति कौमुदीग्रन्थोऽपि सङ्गच्छते। एवञ्च अत्र आदिश्च आदिश्च इति आदी, अत्र य आदिशब्दः प्रथमः सः व्यवस्थायां वर्तते। द्वितीयः यः आदिशब्दः सः सादृश्यार्थकः वर्तते। एवञ्च भू इत्यस्य व्यवस्थावाचिनि आदिपदार्थे अन्वयः।

वा इत्यस्य सदृशार्थे अन्वयः। एवञ्च भूवौ इति समुदायत्वावच्छिन्नस्य एकधर्मावच्छिन्नसंसर्गेण एकधर्मावच्छिन्ने अन्वयो न जात इति कृत्वा भूवौ इत्यत्र द्वन्द्वसमासः न सङ्गच्छते। तथाहि यथा धवखदिरौ छिन्धि इत्यत्र धवखदिरौ इति

द्वन्द्वसमासः वर्तते। तत्र द्वन्द्वस्य साधुत्वाय सहविवक्षायां द्वन्द्वो भवति इत्ययमेव नियमः स्वीकार्य। एवञ्च धवखदिरौ छिन्धि इत्यत्र धवखदिरसमुदायत्वावच्छिन्नस्य एकधर्मावच्छिन्नसंसर्गेण कर्मतात्वावच्छिन्नकर्मता संसर्गेण एकधर्मावच्छिन्ने छेदनक्रियात्वावच्छिन्नछेदनक्रियायामन्वयो भवति। अतः सहविवक्षायाः सत्वात् कृतस्य द्वन्द्वस्य साधुत्वमुपपद्यते। किन्तु भूवौ इत्यत्र यः द्वन्द्वसमासः स्वीकृतः प्रौढमनोरमायां महाभाष्ये भाष्यकृता च तस्य साधुत्वं न सङ्गच्छते। यतो हि भूवौ इति समुदायत्वाच्छिन्नस्य केनचित् एकधर्मावच्छिन्नसंसर्गेण कस्मिन्श्चित् एकधर्मावच्छिन्ने अन्वयो न भवति। अपितु भू इत्यस्य व्यवस्थायामन्वयः, वा इत्यस्य सदृशे प्रतियोगितासम्बन्धेन अन्वय इति कृत्वा एकधर्मावच्छिन्नस्य एकधर्मावच्छिन्नसंसर्गेण एकधर्मावच्छिन्ने अन्वयाभावाद् द्वन्द्वो न सङ्गच्छते। किञ्च आदिश्च आदिश्च इति आदी अत्र एकशेषः कृतः। किन्तु अयमेकशेषोऽपि सहविवक्षायामेव भवति। यतो हि भट्टोजिदीक्षितेन स्वयमेव प्रौढमनोरमायामुक्तं **द्वन्द्वापवाद एकशेष**[2]। अर्थात् द्वन्द्वस्य अपवादो भवति एकशेषः।

तथा च उत्सर्गापवादयोः समानविषयकत्वनियमः। एवञ्च उत्सर्गीभूतः द्वन्द्वः सः सहविवक्षायां प्रवर्तते तस्मात् अपवादभूतेन एकशेषेनापि सहविवक्षायामेव प्रवर्तितव्यम्। यदि एकशेषः सहविवक्षायां न प्रवर्तेत तथा सति तस्य अपवादत्वमेव भज्येत। यतो हि उत्सर्गापवादयोः विभिन्नविषयकत्वात्। अत एव एकशेषः सहविवक्षायामेव प्रवर्तते तस्मात् इदितो नुम् धातोः इति सूत्रनिर्देशः सङ्गच्छते। तथाहि इत् इत् यस्य असौ इदित् अत्र इत् इत् इत्यत्र एकशेषः न जातः। यतो हि इत् इत् यस्य अत्र इत् इत्यस्य अर्थः इकारः इत् इत्युक्ते इत्सञ्ज्ञकः यस्य धातोः, एवञ्च अत्र प्रथमेत् पदार्थस्य द्वितीयेत् पदार्थे अन्वयः। द्वितीयेत् पदार्थस्य अन्यपदार्थे धातौ अन्वय इति कृत्वा एकधर्मावच्छिन्नस्य इदित् इति समुदायत्वावच्छिन्नस्य एकधर्मावच्छिन्नसंसर्गेण एकधर्मावच्छिन्ने धातुत्वावच्छिन्ने अन्वयो नास्ति इति कृत्वा एकशेषो न प्रवर्तते। एवमेव राज्ञां राजा इति राजराजा अत्रापि राजपदयोः एकशेषो न प्रवर्तते। यतो हि तत्र सहविवक्षायाः अभावात्। तेन इदं निश्चप्रचं यत् एकशेषोऽपि सहविवक्षायां प्रवर्तते।

अत्र तु यः प्रथमः आदिशब्दः सः व्यवस्थावाचि वर्तते, द्वितीय आदिशब्दः प्रकारवाचि वर्तते। एवञ्च प्रथम आदिपदस्य भू इत्यत्र अन्वयः द्वितीयः आदिपदार्थस्य वा इत्यत्र अन्वय, एवञ्च अत्रापि पूर्वोक्तरीत्या सह विवक्षायाः अभावात् एकशेषोऽपि न

प्रवर्तते। तर्हि किमर्थं भट्टोजिदीक्षितेन आदिश्च आदिश्च इति आदी भूश्च वाश्च इति भूवौ इत्यत्र क्रमेण एकशेषः द्वन्द्वश्च कृत इति प्रश्नः जायते।

एकपदेन पूर्वोक्तोपस्थापितार्थद्वयस्य परस्परमभेदसम्बन्धेन अन्वयो न भवति एवञ्च भूवौ इति समस्तं पदम्, आदी इति एकमेव पदम्, एवञ्च भू प्रभृतयः वा सदृशाः इत्येवमभेदान्वयोऽपि दुर्लभ एव स्यात्। तर्हि किमर्थं भट्टोजिदीक्षितेन सिद्धान्तकौमुद्यां वृत्तिः लिखिता यत् भू प्रभृतयः वा सदृशाः इति चेत् उच्यते यथा **आद्यन्तौ टकितौ**[3] अत्रापि आदिश्च अन्तश्च इति आद्यन्तौ टश्च कश्च इति टकौ, टकौ इतौ यस्य इति टकितौ। अत्र आद्यन्तौ इत्यत्र भगवता पाणिनिना द्वन्द्वसमासः स्वीकृतः तत्र आदिपदार्थस्य टित् पदार्थे अन्वयः, अन्तपदार्थस्य कित्पदार्थे अन्वयः। एवञ्च अत्रापि एकधर्मावच्छिन्नस्य एकधर्मावच्छिन्नसंसर्गेण एकधर्मावच्छिन्ने अन्वयाभावात् द्वन्द्वस्य साधुत्वं नोपपद्यते तथापि आद्यन्तौ टकितौ इत्यत्र द्वन्द्वस्य साधुत्वोपपत्तये यथा समुदायत्वावच्छिन्नस्य समुदायत्वाच्छिन्ने अन्वयं स्वीकृत्य द्वन्द्वस्य साधुत्वमुपपाद्यते, पश्चात् विशेषजिज्ञासायां **यथासंख्यमनुदेशः समानाम्**[4] इति सूत्रारम्भसामर्थ्यात् आदिपदार्थस्य टित्पदार्थे अन्तपदार्थस्य कित्पदार्थे अन्वयः स्वीक्रियते। स्वीकृतेन चान्वयेन लक्ष्यसंस्कारकमहावाक्यार्थबोधो जन्यते तद्वत् अत्रापि भूवादयो धातवः इत्यत्रापि भूवौ इत्यत्र द्वन्द्वस्य साधुत्वार्थं स्वघटकाभिन्नघटित्व स्वघटकनिष्ठप्रतियोगितानिरूपकसादृश्यवद्घटितत्वैतदुभयसम्बन्धेन भूवा इति समुदायत्वाच्छिन्नस्य आदित्वावच्छिन्ने अन्वयं स्वीकृत्य अत्र सह विवक्षायाः सत्वात् द्वन्द्वस्य साधुत्वमुच्यते।

तथाहि स्वं भू वा इति समुदायः तद् घटकः भूशब्दः तदभिन्नः आद्यर्थकः आदिः तद्घटितत्वं आदी समुदाये वर्तते इति स्वघटकाभिन्नघटितत्व इति प्रथम सम्बन्धेन भूवौ इति समुदायत्वावच्छिन्नस्य आदी इति समुदायत्वावच्छिन्ने अन्वयः। द्वितीयसम्बन्धस्यापि समन्वयो भवति। तथाहि स्वं भूवा इति समुदायः तद् घटकः वा, तन्निष्ठप्रतियोगितानिरुपकसादृश्यवान् द्वितीयः आदिशब्दः तद् घटितत्वं आदी इति समुदाये वर्तते इति कृत्वा स्वघटकनिष्ठप्रतियोगितानिरूपकसादृश्यवद्घटितत्व इति द्वितीयसम्बन्धेन भूवौ इति समुदायत्वाच्छिन्नस्य आदी इति समुदायत्वाच्छिन्ने अन्वयो भवति।

यद्वा अत्र द्वन्द्वस्य साधुत्वोपपत्यर्थं भूवादय इत्यस्य आवृत्तिः क्रियते अत्र भूवौ शब्दयोः व्यवस्थारूपार्थे अन्वयः, पुनः द्वितीययोः भूवौ शब्दार्थयोः प्रकारार्थे अन्वय

इति कृत्वा एकपदेन उपस्थापितयोः द्वयोरर्थयोरभेदसम्बन्धेन अन्वयो न भवति इति नियमस्यापि न विरोध इति कृत्वा भगवता पाणिनिना भाष्यकारेण भट्टोजिदीक्षितेन च भूवौ इत्यत्र यः द्वन्द्वसमासः स्वीकृतः तस्य साधुत्वमुपपद्यते। अत्र सूत्रे द्वितीयो विचारांशः वर्तते यत् सिद्धान्तकौमुद्यां भट्टोजिदीक्षितेन भूप्रभृतयः वा सदृशाः क्रियावाचकाः धातुसञ्ज्ञकाः स्युः अयमर्थः कृतः तत्र इदं जिज्ञास्यते यत् क्रियावाचिन इत्यंशस्य कुतो लाभः। यतो हि अस्य पदस्य कस्मान्श्चित् सूत्रादनुवृत्तिरपि न भवति। तर्हि अनुवृत्तिमन्तरेण अस्य क्रियावाचिन इति पदस्य कुतो लाभः इति विचारणायां मूलकारस्य अयमाशयः प्रतिभाति यत् भू प्रभृतयः वा सदृशाः इत्युक्तं तत्र वा सादृश्यं भू प्रभृतिषु शब्देषु क्रियावाचकत्वेन गृह्यते। तथाहि द्वितीयः आदिशब्दः सः सदृशार्थक इति प्रागेव प्रतिपादितं यत् यत्र सादृश्यं गृह्यते तत्र सादृश्यप्रतियोगितावच्छेदकव्यापकीभूतधर्मेणैव सादृश्यं गृह्यते स च धर्मः अनुयोगितावच्छेदकोऽपि स्यात्, अनुयोगितावच्छेदकव्यापकीभूतोऽपि स्यात्। यदि सादृश्यप्रतियोगितावच्छेदकव्यापकीभूतोधर्मेणैव सादृश्यं गृह्यते तर्हि चन्द्र इव मुखं इत्यादौ चन्द्रसादृश्यं मुखे आह्लादजनकत्वेन अभिप्रेतं, तच्च न सिध्येत्। यतो हि सादृश्यप्रतियोगी चन्द्रः सादृश्यप्रतियोगितावच्छेदको धर्मः चन्द्रत्वं, तद्व्यापकीभूतोधर्मः यथा आह्लादजनकत्वं तद्वत् रात्रिउदयनकर्तृत्वमपि भवति। अतः सादृश्यप्रतियोगितावच्छेदक-व्यापकीभूतो धर्मः आह्लादजनकत्वमिव रात्रिउदयनकृर्तृत्वमपि सम्भवति।

एवञ्च रात्रिउदयनकर्तृत्वरूपेण सादृश्यग्रहणापत्तिः स्यात्। अतस्तद् दोषवारणाय अयं नियमः स्वीकार्यः यत् यत्र सादृश्यं गृह्यते तत्र सादृश्यप्रतियोगितावच्छेदकव्यापकीभूतो धर्मेणैव सादृश्यं गृह्यते स च धर्मः अनुयोगितावच्छेदकोऽपि स्यात् एवञ्च रात्रिउदयनकर्तृत्वमनुयोगिनि मुखे नास्ति। अत अनुयोगितावच्छेदको धर्मः रात्रिउदयनत्वं न जातम्। अतः रात्रिउदयनकर्तृत्वस्य सादृश्यप्रतियोगितावच्छेदकीभूतव्यापकत्वेऽपि अनुयोगितावच्छेदकाभावात् तेन धर्मेण सादृश्यं न गृह्यते। आह्लादजनकत्वस्य मुखेऽपि सत्वात् अनुयोगितावच्छेदकत्वं तस्य सम्भवति इति कृत्वा चन्द्र इव मुखमित्यादौ आह्लादजनकत्वं यथा सादृश्यप्रतियोगितावच्छेदकव्यापकीभूतो धर्मः तद्वदनुयोगिता-वच्छेदकोऽपि भवति इति कृत्वा आह्लादजनकत्वेन सादृश्यं गृह्यते। अत्रापि वा सदृशाः इत्युक्तं, तत्र सादृश्य प्रतियोगी वा, सादृश्यप्रतियोगितावच्छेदको धर्मः वात्वं, तद्व्यापकीभूतो धर्मः क्रियावाचकत्वम्। अतः क्रियावाचकत्वरूपेण धर्मेण वा सादृश्यस्य गृह्यमाणे सति क्रियावाचिन इत्यंशस्य लाभो भवति इति दीक्षितमतं प्रतिभाति इति।

परन्तु तन्मतं न समीचीनं यतो हि सादृश्यप्रतियोगितावच्छेदकव्यापकीभूतधर्मेणैव सादृश्यं ग्राह्यमिति नियमः। अत्र सादृश्यप्रतियोगितावच्छेदको धर्मः वात्वं वर्तते, तद् व्यापकीभूतो धर्मः क्रियावाचकत्वं नास्ति। यतो हि तद् व्यापकत्वं नाम तद्वन्निष्ठात्यन्ताभावा-प्रतियोगित्वम्। एवञ्च वात्वं यथा धातौ वर्तते तद्वद् विकल्पार्थकः वा इत्यत्रापि वर्तते। वात्ववद् विकल्पार्थकः वा शब्दः, तन्निष्ठात्यन्ताभावः क्रियावाचकत्वं नास्ति इति प्रतीतिसिद्धात्यन्ताभावः, तादृशात्यन्ताभावः प्रतियोगित्वमेव वर्तते क्रियावाचकत्वे, अप्रतियोगित्वं नागतमिति कृत्वा सादृश्यप्रतियोगितावच्छेदको वात्वं व्यापकत्वं क्रियावाचकत्वे न सम्भवति। अतः क्रियावाचकत्वेन रूपेण सादृश्यं प्रकृतस्थले नेतुं न शक्यते अतः क्रियावाचिन इत्यंशस्य दीक्षितरीत्या लाभः न सम्भवति। तर्हि क्रियावाचिन इत्यस्य कथं लाभ इति प्रश्नः तदवस्थ एव।

तत्रोच्यते अस्तु परस्परसाहचर्येण क्रियावाचकत्वस्य लाभः। तथाहि वा शब्दः द्विविधः वर्तते। एकः वा गतिगन्धनयोः इति धातुपाठे अदादिगणे पठितः, द्वितीयः विकल्पार्थकः वा इति। द्वावपि वा शब्दौ असत्ववाचिनौ, तत्साहचर्येण भूवादयो धातवः इति सूत्रोपात्तः भू शब्दः असत्ववाची एव गृह्यते एवञ्च असत्ववाची यः भू शब्दः सः सत्तारूपक्रियावाचक एव। अतः भू शब्दसाहचर्येण असत्ववाचिनो वाशब्दयोर्मध्ये क्रियावाचक एव असत्ववाची वा शब्दः गृह्यते इति कृत्वा परस्परसाहचर्येण क्रियावाचक इत्यर्थस्य लाभः सम्भवति। तत्रोच्यते यत् परस्परसाहचर्येण इत्यंशस्य लाभेऽपि क्रियावाचक इत्यंशस्य वृत्या अनुपस्थितत्वात् अनुपस्थितस्य पदार्थस्य शाब्दबोधे भानानङ्गीकारात् भूवादयो धातवः इत्येतद् सूत्रजन्यशाब्दबोधे क्रियावाचिनः अथवा क्रियावाचका इत्यंशस्य लाभः न सम्भवति। यदि वृत्या अनुपस्थितस्यापि पदार्थस्य शाब्दबोधे भानं अङ्गीक्रियेत तथा सति घटमुच्चारय इत्यादौ एकसम्बन्धिज्ञानं अपरसम्बन्धिनः स्मारकं भवति इति नियमेन घटशब्देन सम्बन्धिनः आकाशस्य स्मरणाद् घटं पश्यति घटं उच्चारयति इत्येतद् वाक्यजन्यशाब्दबोधे आकाशस्यापि भानापत्तिः स्यात्। तद् वारणाय वृत्या उपस्थितस्यैव पदार्थस्य शाब्दविषयत्वमङ्गीकार्यं, क्रियावाचक इत्यंशस्य तु परस्परसाहचर्येण अनुपस्थितत्वात् तस्य शाब्दविषयत्वं न स्यात्, तर्हि किमर्थं भट्टोजिदीक्षितेन भू प्रभृतयः वा सदृशाः क्रियावाचकाः शब्दाः पाणिनिसङ्केतसम्बन्धेन धातुपदवन्तो भवन्ति इति तात्पर्येण वृत्तिः लिखिता इति चेत्।

अत्रोच्यते अभिधया लक्षणया वा क्रियावाचक इत्यंशस्य अनुपस्थितत्वेपि व्यञ्जनावृत्या क्रियावाचक इत्यंशस्योपस्थितिरङ्गीक्रियते। एवञ्च वैयाकरणनिकाये व्यञ्जना वृत्तेरङ्गीकारात् व्यञ्जनया उपस्थितस्य क्रियावाचक इत्यंशस्य सत्वात् तस्य भूवादयो धातवः इत्येतद् सूत्रजन्यवाक्यबोधे भानं भवत्येव। व्यञ्जना वृत्तिः स्वीकारादेव वैयाकरणानां स्फोटवादोऽपि सङ्गच्छते। यतो हि ध्वनिव्यङ्ग्यः स्फोटः इति वैयाकरणानां सिद्धान्तः। यदि व्यञ्जना वृत्तिः न स्यात् तर्हि वैयाकरणानां यः मुख्यः सिद्धान्तः स्फोटवादः सोऽपि भज्येत। तस्मात् व्यञ्जना वृत्तिः वैयाकरणैः अङ्गीकार्या। कृतायाञ्च अस्यां वृत्तौ अनया वृत्या क्रियावाचक इत्यंशस्य उपस्थित्या तस्य शाब्दविषयत्वं सम्भवत्येव। अतः न दोषः एवञ्चाधुना भ्वादिगणपठितानुपूर्वी सदृशानुपूर्वीमन्तः वा सदृशाः शब्दाः पाणिनिसङकेतसम्बन्धेन धातुपदवन्तो भवन्ति इत्यर्थोऽङ्गीकार्यः। तेन अस्मदादि उच्चरितस्य भू इत्यस्य भ्वादिगणापठितत्वेऽपि भ्वादिगणपठितानुर्वी सदृशानुपूर्वीमत्वस्य अस्मदादि उच्चारिते भू शब्दे सत्वात् तस्य धातुत्वं सिध्यति। एवञ्च अधुना परिष्कृतं धातुत्वं भ्वादिगणपठितत्वे सति क्रियावाचकत्वमित्यर्थः निष्पन्नः।

भ्वादिगणपठितदलमपहाय क्रियावाचकत्वमात्रोक्तौ वर्जनादि क्रियाबोधके हिरुक् पृथक् इत्यादौ क्रियावाचकस्य सत्वात् धातुत्वापत्तिः स्यात्। तद्वारणाय भ्वादिगणविशेषणं वक्तव्यं, दत्ते च विशेषणे हिरुक् नाना पृथगव्ययानां क्रियावाचकत्वेऽपि भ्वादिगणपठितत्वाभावेन एकसत्वे द्वयं नास्ति इति कृत्वा भ्वादिगणपठितत्वविशिष्टक्रिया-वाचकत्वस्याभावात् नातिव्याप्तिः। तथा चोक्तं **श्रीमता कौण्डभट्टेन**[5] अत्र हि क्रियावाचकत्वमात्रोक्तं वर्जनादि क्रियावाचके हिरुक् नाना इत्यादौ अतिव्याप्ति इति भ्वादिगणपठितत्वम् उक्तम्। हिरुक् इत्यादिभ्यः प्रतीयमानस्य वर्जनाद्यर्थस्य क्रियान्तराङक्षा सत्वात् क्रियान्तराङ्क्षानुत्थापकतावच्छेदकरूपेण प्रतीयमानत्वाभावेन क्रियात्वमेव नास्ति। क्रियावाचकत्वव्यवहारस्तु एषां क्रियामात्रविशेषणत्वात् लिङाद्यनन्वयित्वाच्च गौण एव। अतः भ्वादिगणपठितत्वरूपविशेषणस्य फलं शब्दरत्नकृता **वट्टयति**[6] इति अपभ्रंशे अतिव्याप्ति स्यादिति दोषः प्रदत्तः। किञ्च भूषणसारकृता अपि हिरुक् नाना इत्यादौ अतिव्याप्ति इत्युक्तम्। तत्र आदि पदोपादाने इदमेव स्वारस्यं प्रतीयते। अत आदि पदेन शिश्ये इति भावार्थक तिङः आणवयति वट्टयति इत्यादेः संग्रहः कर्तव्यः।

अत्र क्रियावाचकत्वं धातुत्वमित्युक्तौ शिश्ये इति भावतिङन्तस्य धातुसञ्ज्ञायां

शिश्ये इत्यत्र एकारस्य आदेच उपदेशेऽशिति इति सूत्रेण आत्वं प्रसज्येत। तिङन्तस्य तु उपदेशाभावान्नात्र प्रसक्तिः इति एकारस्य एव धातुसञ्ज्ञापत्तिः ज्ञेया। एकारस्य धातुसञ्ज्ञायां सत्यां आत्वापत्तिरूपदोषः न तु तिङोत्पत्तिरूपदोषः। यतो हि तेभ्यः तिङां उत्पत्तिः न सम्भवति इति **भैरवमिश्रादिभिः**[7] बहुधा विचारितम्। तस्मात् अत्र आत्वापत्तिरेव दोषः। ननु अशिति पर्युदास इव प्रसज्यपक्षेऽपि शित्वपरत्वयोग्यतैव आत्वप्रसक्तौ निमित्तमिति यदि स्वीक्रियते तदा शित्परत्वयोग्यतायाः अभावात् न आत्वप्रसक्तिः। अतः शिश्ये इत्यत्र एकारस्य धातुसञ्ज्ञायां सत्यामपि न दोष इत्याकाङ्क्षायामुच्यते आणवयति वट्टयति इत्यनयोः क्रमेण आज्ञापयति वर्तयति इत्यर्थकतया तयोः धातुसञ्ज्ञायां शास्त्रविषयकतया साधुत्वापत्तिः स्यात्।

एवञ्च एतादृशानां शब्दानां यज्ञे कर्मणि प्रयोगापत्तिः स्यात्। भ्वादिगणविशेषणं दीयते चेत् आणवयति वट्टयति गणपठितत्वाभावेन न तेषां शास्त्रविषयकत्वम्। अतः साधुत्वं न भवति साधुत्वाभावे यज्ञे कर्मणि एतादृशानां शब्दानां प्रयोगे नानृतं यज्ञे कर्मणि वदेत् इति नियमप्रसक्तौ प्रत्यवायो जायते। तथा आणवयति वट्टयति इति अपभ्रंशानां धातुत्वापत्तिवारणाय भ्वादिगणपठितत्वं विशेषणं देयम्। अत्र विचार्यते भ्वादिगणविशेषणत्वाभावे आणवयति वट्टयति धातुत्वापत्तिः आपादितः। अतः तेषां धातुत्वापत्तिवारणाय तेषां भ्वादिगणपठितत्वं धातुत्वमेतावदेव लक्षणमुच्यतां क्रियावाचकत्वं मास्तु। तर्हि उच्यते भ्वादिगणपठितत्वमेतावान्मात्रोक्तौ सर्वनामसञ्ज्ञकः यत् शब्दः तस्य स्त्रीत्वविवक्षायां याः इति रूपं तस्या अपि धातुत्वं स्यात् गणपठितया धातुवृत्त्यानुपूर्वसदृशानुपूर्वीमत्वस्य सर्वनाम या शब्दे सत्वात् भ्वादिगणपठितत्वेन धातुत्वापत्तिः यद्युच्यते भवतु धातुत्वं कोऽत्र दोष? इत्याङ्क्षायामुच्यते सति धातुत्वे याः पश्यति इत्यत्र आकारलोपे कृते यः पश्यति प्रयोगः प्रसज्येत। अतः याः पश्यति इत्येतद् घटकः यत् प्रकृतिभूतस्य याः इत्यस्य धातुत्वापत्तिवारणाय क्रियावाचकत्वं निवेशः कार्यः। अत्र याः इत्यत्र प्रातिपदिकत्वेन क्रियावाचकत्वाभावात् न धातुत्वं भवति अतः **आतो धातोः**[8] इत्यनेन आकारलोपोऽपि न भवति तर्हि याः पश्यति अयमेव प्रयोगः न तु तस्य स्थाने यः पश्यति इति अनिष्टं रूपं भवति।

अत्रोच्यते क्रियावाचकत्वस्य इत्यंशस्य अभावे याः पश्यति इत्येतद् घटकः याः इत्यस्य न धातुत्वापत्तिः। यतो हि भूवादयो धातवः इत्यस्मिन् सूत्रे लक्षणप्रतिपदोक्तयोः

प्रतिपदोक्तस्यैव ग्रहणं इत्यस्याः परिभाषाया उपस्थितिः कार्यते। तथा च प्रतिपदोक्तः या इत्यस्यैव भ्वादिगणपदेन ग्रहणं न तु सर्वनाम्नो या इत्यस्य, तस्य लक्षण प्रवृत्यनुसन्धान–सम्पन्नत्वात्। अतः लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणं इत्यस्याः परिभाषायाः भूवादयो धातवः एतत् सूत्रे प्रवृत्या याः पश्यति इत्येतद् घटकः याः इत्यस्य धातुत्वापत्तिः नास्ति। अतः क्रियावाचकत्वमित्यंशस्य अभावेऽपि याः पश्यति इत्येतद् घटकस्य तत्प्रकृतिभूतस्य याः इत्यस्य धातुत्वापत्तिः नास्ति इति तु वक्तुं न शक्यते। यतो हि भूवादयो धातवः इत्यस्मिन् सूत्रे लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणं अस्याः परिभाषाया उपस्थितिरपि भवितुं नार्हति उक्तञ्च शब्दरत्नकृता

**नकारजावनुस्वारपञ्चमौ झलि धातुषु ।**
**सकारजः शकारश्च षाट्टवर्गस्तवर्गजः**[9]।।

इत्यभियुक्ते लाक्षणिकानामपि दर्शनेन तद् विषये तत् परिभाषायाः अप्रवृत्तेः । अयं भावः–स्त्रंसु ध्वंसु शपरः सकारः यथा हरिश्शेते ब्रुश्च इत्यादि रेफसकारभ्यां परश्टवर्गः तवर्गजः यथा उर्णुञ् आच्छादने इत्यादि। एवञ्च येषां लक्षणप्रवृत्योत्तरकालिक ज्ञानविषयस्वरूपकत्वं तेषामपि धातुपाठे पाठसामर्थ्येन धातुसञ्ज्ञाविधौ लक्षणप्रतिपदोक्त–परिभाषायाः प्रवृत्तिः न स्वीक्रियते। किञ्च पशुष इत्याद्यापत्तिश्च पशुं सनोति इति **जनसनखनक्रमो विट्**[10] इति सूत्रेण विट् प्रत्यये कृते विड्वनोरनुनासिकस्स्यात् इति सूत्रेण आत्वे कृते। तथा सति आतो धातोः आकारस्य लोपे सति पशुषः इति सिध्यति। यदि तु आतो धातोः प्रतिपदोक्त एव आकारः गृह्यते। तर्हि सा इत्यत्र आकारस्य लाक्षणिकत्वात् तस्य आतो धातोः इत्यनेन सूत्रेण लोपः न स्यात् तथा पशुषः सिध्येत्। अतः आतो धातोः इत्यत्रापि लक्षणप्रतिपदोक्तयोः **प्रतिपदोक्तस्यैव ग्रहणम्**[11] इत्यस्याः परिभाषायाः उपस्थितिः कारयितुं न शक्यते।

आतो धातोः इत्यत्र प्रतिपदोक्त एव आकारः गृह्यते इति तु वक्तुमपि अशक्यं, पशुषः इत्यसिद्धापत्तेः इत्युक्तं **शब्दरत्नकृता**[12]। परन्तु अत्रेदं जिज्ञास्यते यत् श्नः इत्यादि प्रयोगसिद्ध्यर्थं वार्तिककृता आतो धातोः इत्यस्य स्थाने आतोऽनापः इति न्यासः कृतः। एवञ्च आब्घटक आकारभिन्नस्य आतः लोपः अनेन सूत्रेण विधीयते। एवञ्च क्रियावाचकत्वमित्यंशस्य अभावे याः पश्यति इत्येतद्घटकयाः इत्यस्य सत्यामपि धातुसञ्ज्ञायां आतोऽनापः इति न्यासपक्षे आकारस्य लोपः न प्राप्नोति या इत्यत्र आकारस्य

टाप् बोध्यत्वेन आप् बोध्यत्वाभावात्। अतः क्रियावाचकत्वमित्यंशस्य फलं याः पश्यति इति भवितुं नार्हति तथा सति विकल्पार्थकः वा इत्यस्य अव्ययस्य धातुत्वापत्तिः आतोऽनापः इति वार्त्तिकमते ज्ञेया। विकल्पार्थक वा इत्यस्य धातुसञ्ज्ञायां वाति इति प्रयोगापत्तिः स्यात्। अतः तादृशप्रयोगो मा भूत एतदर्थं धातुलक्षणे क्रिवाचकत्वम् इत्यंशस्य निवेशः कार्यः।

**सन्दर्भसूचिः-**


1 निरुक्तम्।

2 प्रौढमनोरमा सरूपाणामेकशेष एकविभक्तौ।

3 पाणिनीसूत्रम्।

4 पाणिनीसूत्रम्।

5 वैयाकरणभूषणसारः, धात्वर्थप्रकरणम्, पृष्ठसंख्या 90, प्रकाशकः चौखम्भा संस्कृत संस्थानम् वाराणासी, विक्रम संवत 2068।

6 प्रौढमनोरमा शब्दरत्न, पृष्ठ संख्या 93, प्रकाशकः चौखम्भा संस्कृत संस्थानम् वाराणासी।

7 प्रौढमनोरमा भैरवी टीका, पृष्ठ संख्या 93।

8 पाणिनीसूत्रम्।

9 प्रौढमनोरमा शब्दरत्नम्, पृष्ठ संख्या 89, प्रकाशकः चौखम्भा संस्कृत संस्थानम् वाराणासी।

10 पाणिनीसूत्रम्।

11 परिभाषेन्दुशेखरः, परिभाषा पृष्ठ संख्या 220, प्रकाशन चौखम्भा सुरभारती।

12 प्रौढमनोरमा, शब्दरत्नम् पृष्ठसंख्या 66।

# अद्वैतसिद्धिरीत्या अत्यन्ताभावीयप्रतियोगिताया: सम्बन्धावच्छिन्नत्वनिराकरणम्

**पी. आर्. वासुदेवः**
अद्वैतवेदान्ताध्ययनपीठम्,
मद्रपुरी संस्कृतादर्शमहाविद्यालयः चेन्नै।

अद्वैतसिद्धौ द्वितीयमिथ्यात्वनिरूपणप्रसङ्गे **''विमतम्-मिथ्या-दृश्यत्वात्-शुक्तिरूप्यवत्''** इति अनुमानप्रयोगे सिषाधयिषितम् मिथ्यात्वम् प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वरूपं विवरणकाराभिमतम्। अत्र प्रतिपन्नपदेन स्वप्रकारक-प्रतीतिविशेष्यम् इति अर्थो ग्राह्यः। तादृशविशेष्यं च ब्रह्मैव, सद्रूपे एव सर्वेषाम् निषिध्यमानत्वात्। तथा च सन्निष्ठात्यन्ताभावप्रतियोगित्वम् इति उक्तम् चेदपि पर्याप्तम् तथापि उपाधिपदम् किमर्थम् प्रयुक्तम् इति चेत्, उपाधिः स्वगतधर्मम् अन्यत्र आसञ्जयति। ब्रह्म तु स्वस्वरूपभूतमपि सत्वम् आरोप्यगततया भासयति, तथा च ''घटः सन्'' इति प्रतीत्युपपत्तिः। एतन्निरूपणेन च घटादीनाम् बाधात्पूर्वम् सत्तादात्म्यलाभः। तथा च ''ननु **एवम् अत्यन्तासत्वापातः''** इति द्वैतिना कृतः प्रश्नः न समुन्मिषति इति तदर्थम् उपाधिपदप्रक्षेपः। एतावता च किमुक्तम् भवति? एतदुक्तम् भवति-तादात्म्येन स्वसम्बन्धितया ज्ञाते धर्मिणि सति विद्यमानः यः त्रैकालिको निषेधः तत्प्रतियोगित्वम् इति। स्वपदेन यत्र मिथ्यात्वम् उपपादनीयम् तद्ग्राह्यम्। दृष्टान्ते च शुक्तिरूप्यस्य ग्रहणे स्वसम्बन्धितया ज्ञाते धर्मिणि शुक्त्यादौ विद्यमानाभावप्रतियोगित्वस्य ''रजतम् नासीत् नास्ति न भविष्यति'' इति प्रतीत्या सिद्धेः शुक्तिरूप्ये मिथ्यात्वलाभः। त्रैकालिकत्वम् अत्यन्ताभावलाभाय। पक्षकोटिप्रविष्टघटादौ साधनाय स्वपदेन घटस्य ग्रहणे तत्प्रकारकधीविशेष्ये कपालादौ वर्तमानाभावप्रतियोगित्वस्य एतदनुमानप्रवृत्तेः पूर्वम् असिद्धत्वात् सिद्धसाधनदोषाभावात् हेतुबलेन मिथ्यात्वसिद्धिः।

ननु एवमपि यावत्सदधिकरणकात्यन्ताभावप्रतियोगित्वम् इति लक्षणे स्वीकृते गगनाभावस्य केवलान्वयित्वेन तादृशात्यन्ताभावप्रतियोगित्वस्य गगने अनुमानात् पूर्वमपि सम्भवात् सिद्धसाधनम् इति चेत् न, यदधिकरणम् यद्यत् तत्तन्निष्ठात्यन्ताभावप्रतियोगित्वस्य मिथ्यात्वात्। तथा च गगनस्य अधिकरणाप्रसिद्धेः यत्पदेन गगनस्य धर्तुमशक्यत्वात् न पूर्वोक्तम् सिद्धसाधनम्।

ननु एवमपि समवायेन घटाधिकरणे देशे संयोगेन घटाभावस्य पूर्वमेव सिद्धत्वात् सर्वेषु वृत्तिमत्सु सिद्धसाधनापत्तेरिति चेत् न, सम्बन्धविशेषस्यापि तत्र निवेश्यत्वात्। तथा च येन सम्बन्धेन यत् प्रतिपन्नं तेन सम्बन्धेन तत्र अभावप्रतियोगित्वस्य विवक्षणात् अदोषः।

ततः परम् सिद्धौ ''एवम् संयोगसम्बन्धेन घटवति भूतले समवायसम्बन्धेन घटाभावसत्वे मानाभावाल्लाघवेन घटात्यन्ताभावत्वेनैव घटसामानाधिकरण्यविरोधित्वकल्पनात्, सम्बन्धविशेषप्रवेशे च गौरवात्, घटसमवायाद्यभावमात्रविषयकतया प्रतीतेरुपपत्तेः, आधाराधेयभावस्य प्रत्यक्षसिद्धत्वेन अवृत्तित्वशङ्कानुदयात्, **उक्तयुक्तेश्च न घटादेः अत्यन्ताभावसामानधिकरण्यम्''** इति ग्रन्थेन सम्बन्धविशेषप्रवेशस्यापि अनपेक्षितत्वम् उपपादितम्। तथा च संयोगेन घटवति भूतले समवायेन घटाभावसत्वे घटस्य स्वात्यन्ताभावसामानाधिकरण्यम् स्यात्, किन्तु तादृशस्थले तादृशाभावसत्वे प्रत्यक्षानुमाना-दिरूपप्रमाणाभावेन तदसिद्धेः। तथा च स्वात्यन्ताभावसामानाधिकरण्यासिद्धौ तु न पूर्वोक्तरीत्या सिद्धसाधनम् इति तद्वारणाय सम्बन्धावच्छिन्नत्वमपि विशिष्य न निवेश्यम् इति।

अत्र विचार्यते–अस्त्येव प्रमाणम्। अनुमानस्यैव प्रमाणत्वसम्भवादिति। तथा हि–घटस्य घटाभावेन सह यः विरोधः अनुभूयते, संयोगादिसम्बन्धविशेषघटितः सः समवायादिसम्बन्धान्त-रावच्छिन्नघटाभावसाहचर्यं विना न सम्भवति यतः संयोगावच्छिन्नघटाभावस्य घटसंयोग्यवृत्तित्वनियमः इत्यस्य संयोगावच्छिन्नघटाभावत्वम् घटसंयोग्यवृत्तित्वव्याप्यम् इत्यर्थः। समवायसम्बन्धावच्छिन्नघटाभावस्यापि यदि घटसंयोग्यवृत्तित्वमेव तथा सति घटसंयोगिनि वर्तमाने विशेषाभावे निरुक्तव्याप्तेः व्यभिचरितत्वेन तद्वारणाय घटत्वावच्छिन्न-प्रतियोगिताकाभावत्वत्वेन घटत्वावच्छिन्नप्रतियोगिताकाभावत्वस्य घटसंयोग्यवृत्तित्वव्याप्यत्वम् वाच्यम्, तथा च सति संयोगसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वस्य स्वसमानाधिकरण-व्याप्यतावच्छेदकधर्मान्तरघटितत्वेन व्याप्यत्वासम्भवेन निरुक्तव्याप्तिरेव न लभ्येत। समवायावच्छिन्नघटाभावस्य घटसंयोगिवृत्तित्वे च अभ्युपगते घटत्वावच्छिन्नप्रतियोगिता-काभावत्वत्वेन घटत्वावच्छिन्नप्रतियोगिताकाभावत्वस्य व्याप्यत्वासम्भवेन संयोगावच्छिन्नघट-त्वावच्छिन्नप्रतियोगिताकाभावत्वत्वेनैव व्याप्यत्वसम्भवः। व्याप्यताघटकतया घटत्वावच्छिन्न-त्वस्य प्रवेशेन विशेषाभावे न व्यभिचारश्चेति। अथवा अर्थापत्तेरेव विवक्षितत्वोपपादनम् अत्र सुकरम्–घटस्य घटाभावेन सह यः संयोगादिसम्बन्धविशेषघटितः विरोधः अनुभूयते सः समवायादिसम्बन्धान्तरावच्छिन्नघटाभावसाहचर्यं विना अनुपपन्नः इति घटसंयुक्ते

समवायावच्छिन्नघटाभावव्यतिरेके घटस्य संयोगादिसम्बन्धविशेषघटितविरोधव्यतिरेकः सेत्स्यति। तथा च घटसंयुक्तवृत्तिसमवायावच्छिन्नघटाभावव्यतिरेकव्यापकीभूताभावप्रतियोगित्वस्य निरुक्तसम्बन्धविशेषघटितविरोधित्वे ग्रहणेन तादृशविरोधित्वस्य घटे स्वीकारे तत्र समवायावच्छिन्नघटाभावसाहचर्यस्यापि सिद्धिः इति अर्थापत्तिरेवात्र विवक्षिता इति। **''तथा च उक्तविरोधितयोः अन्यथानुपपत्तिरेव संयोगादिना तदुत्तरघटाधिकरणक्षणे समवायादिना तदभावसाधिका''** इति मूलस्थान्यथानुपपत्तिपदस्य सिषाधयिषित-वस्तुव्यतिरेकव्यापकीभूताभावप्रतियोगित्वम्, ''साधिका'' इति पदस्य ''अर्थापत्तिरूप-सिद्धिप्रयोजिका'' इति, पूर्वव्याख्याने च ''अन्यथा'' इत्यस्य ''घटसंयोगिनि समवायावच्छिन्न-घटाभाववृत्तेरनुपगमे'' ''अनुपपत्तिः'' इत्यस्य ''असम्भवः'' इति च अर्थाः व्याख्येयाः।

अस्य चायं समाधिः- लाघवेन घटात्यन्ताभावत्वेन घटसामानाधिकरण्यस्य विरोधित्वकल्पनादिति अभावप्रतियोगितामात्रस्य सम्बन्धावच्छिन्नत्वाकल्पनया सम्बन्धविशेष-विषयत्वघटितरूपेणाभावबुद्धेः प्रतिबन्धकत्वाकल्पनया च लाघवसम्भवेन घटत्वावच्छिन्न-प्रतियोगिताकात्यन्ताभावत्वेनैव घटात्मकप्रतियोगिनः सामानाधिकरण्यघटितस्य साक्षाद्विरोधित्वस्य ज्ञानद्वारकविरोधित्वस्य च कल्पनादिति। तथा च सम्बन्धावच्छिन्नत्वम् अनन्तर्भाव्य विरोधित्वकल्पने लाघवं स्पष्टमेव। किञ्च संयोगादिसम्बन्धानां प्रतियोगितावच्छेदकत्वकल्पने संयोगादिनानासम्बन्धावच्छिन्नप्रतियोगिताकानाम् अनन्तानामभावानां कल्पनीयतया गौरवम्। एवं सम्बन्धघटितरूपेण अभावबुद्धेः प्रतिबन्धकत्वकल्पने संयोगादिसम्बन्धावच्छिन्नत्व-घटत्वावच्छिन्नत्वयोः प्रतियोगितांशे विशेषणविधया निवेश्यतया गौरवम्। किञ्च संयोगावच्छिन्नत्वघटत्वावच्छिन्नत्वविषयतयोः पृथक् अवच्छेदकत्वस्य असम्भवेन एकविशिष्टापरविषयतानिरूपितत्वेनैव अवच्छेदकतायाः वक्तव्यतया विशेष्यविशेषणभावे परस्परं विनिगमनाविरहे प्रतिबन्धकताभेदः, तेन च कारणत्वभेदः इत्येव गौरवपराहत्वात् न पूर्वोक्तार्थापत्त्या सम्बन्धावच्छिन्नत्वसिद्धिरिति।

ननु तथापि घटसंयुक्ते ''समवायेन घटो नास्ति'' इति प्रतीत्यन्यथानुपपत्तिरेव अभावस्य सम्बन्धावच्छिन्नप्रतियोगिताकत्वम् तादृशाभावस्य घटसंयोगिवृत्तित्वम् च साधयतीति चेत् न, ''समवायेन घटो नास्ति'' इति प्रतीतेः घटसमवायाद्यभावमात्रविषयकतया, घटसमवायत्वावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नप्रकारतानिरूपितभूतलादिविशेष्यतात्वेनैव प्रतिबन्धकतायाः अपि उपपत्तेः न अन्यथानुपपत्तेरस्ति समुन्मेषः।

ननु – ''समवायेन घटो नास्ति'' इति प्रतीतेः घटसमवायाभावविषयकत्वं कथम् उपपद्यताम्? प्रथमान्तार्थस्य घटस्य प्रतियोगितया समवाये, तृतीयान्तार्थस्य समवायस्य नञर्थे च अन्वयस्य क्वचिदपि अदर्शनात् अव्युत्पत्तिः। तृतीयार्थवैशिष्ट्यस्य घटे भानेऽपि समवायविशिष्टस्य घटस्यैव प्रतियोगित्वं सम्भवेत्, न कथमपि घटसमवायस्य इति चेत्, उच्यते–तृतीयार्थस्य वैशिष्ट्यस्य घटान्वयित्वेऽपि ''शिखी चैत्रे नष्टः'' इत्यत्र चैत्रसत्वदशायां शिखाविशिष्टचैत्रस्य न प्रतियोगित्वसम्भवः, नापि शिखायाः, तस्याः चैत्रे विशेषणतया उपस्थितेः अन्यत्र विशेषणत्वासम्भवात् तथापि तादृशशिखाविशिष्टचैत्रस्यैव स्वीयशिखाप्रति–योगिकत्वरूपपरम्परासम्बन्धेन अभावे प्रकारतया भानम् उपेयते। तथा च ''सविशेषणे हि विधिनिषेधौ विशेषणम् उपसङ्क्रामतः सति विशेष्ये बाधे'' इति न्यायेन तादृशप्रतीतेः शिखाप्रतियोगिकध्वंसविषयकत्वं पर्यवस्यति। **अनुमानदीधितौ** तावत् मत्वर्थीयार्थत्वम् अविवक्षन् भट्टाचार्यः विशिष्टाभावप्रतीतेः विशेष्ये बाधदशायां विशेषणाभावविषयकत्वम् उपपादितवान्। तत्तु ''शिखी नष्टः'' इति चैत्रादिरूपविशेष्यानुपरागे श्लिष्यते, विशेष्योपरक्तप्रतीतौ पूर्वोक्तरीतिरेव रमणीया इति ग्रन्थकाराः कथयन्ति। अत एव ''शिखी चैत्रे नष्टः'' इति चैत्रपदम् उपात्तम्।

ननु ''समवायेन घटो नास्ति'' इति निश्चयस्य घटसमवायाभावविषयकत्वे ''समवायेनात्र घटः'' इति धीप्रतिबन्धकत्वं न स्यात्, ग्राह्याभावानवगाहित्वात् इति चेत् न ''घटसमवायोऽत्र नास्ति'' इति निश्चयोत्तरं ''समवायेनात्र घटः'' इति ज्ञानानुत्पादस्य सर्वानुभवसिद्धतया परैरपि तादृशधियः प्रतिबन्धकतायाः वक्तव्यत्वेन घटसमवायाभाव–विषयकत्वेऽपि अदोषात्। ननु परैः सम्बन्धावच्छिन्नत्वाङ्गीकारात् सम्बन्धान्तरावच्छिन्ना–भावज्ञानव्यावृत्तये स्वरूपसम्बन्धावच्छिन्नघटसमवायत्वावच्छिन्नप्रतियोगितानिरूप–काभावत्वेनैव प्रतिबन्धकत्वं वाच्यम्। ''समवायेन घटो नास्ति'' इति बुद्धौ तादृशस्वरूपसम्बन्धावच्छिन्नप्रतियोगितायाः उल्लेखाभावेन न परोक्तरीत्या प्रतिबन्धकत्वसम्भवः इति चेत् न, अस्मन्मते प्रतियोगितायां सम्बन्धावच्छिन्नत्वानङ्गीकारादेव सम्बन्धान्तरा–वच्छिन्नाभावव्यावृत्तेः अनपेक्षितत्वेन ''समवायेन घटो नास्ति'' इति प्रतीतिविषयी–भूताभावप्रतियोगितायाः सम्बन्धावच्छिन्नत्वस्य अनिवेशेन लाघवात् घटसमवायत्वा–वच्छिन्नप्रतियोगितानिरूपकाभावत्वावच्छिन्नप्रकारतानिरूपितभूतलनिष्ठविशेष्यतानिरूपक–निश्चयत्वेनैव प्रतिबन्धकत्वसम्भवादिति।

ननु कपालादौ घटाद्युत्पत्यनन्तरं पुनः घटाद्युत्पत्तिवारणाय समवायेन घटं प्रति समवायेन घटस्यैव प्रतिबन्धकता, समवायेन तदभावस्य कारणता च स्वीकार्या। सम्बन्धावच्छिन्नत्वानङ्गीकारे घटोत्पादकसामग्रीसत्वे घटान्तरसंयुक्ते कपाले घटोत्पत्तिः न स्यात्, तत्र घटाभावस्य कारणीभूतस्य अभावात्। तथा च सम्बन्धावच्छिन्नत्वस्य प्रतियोगितायाम् निवेश्यत्वात् इति चेत् न, एकसम्बन्धवति अपरसम्बन्धस्य प्रतिबन्धकतासम्भवेन तादृशसम्बन्धाभावस्यापि घटोत्पत्तिप्रयोजकत्वाङ्गीकारसम्भवात्। तथा च घटान्तरसंयुक्तेऽपि कपाले घटसमवायस्य अभावसम्भवेन घटसंयुक्तेऽपि घटोत्पत्तिः सम्भवति। तथा च अत्यन्ताभावीयप्रतियोगितायाः सम्बन्धावच्छिन्नत्वे प्रमाणाभावेन संयोगेन घटवति समवायेन घटाभावासम्भवात् न सिद्धसाधनशङ्कापि इति उक्तमिथ्यात्वरूपे साध्ये न प्रतियोगितायाः प्रकारातायाः वा सम्बन्धविशेषावच्छिन्नत्वनिवेशावश्यकता च।

### उपयुक्तग्रन्थसूची


1. गादाधरी – चौखम्भा संस्कृत संस्थान, वाराणसी
2. अद्वैतसिद्धिः – परिमल पब्लिकेशन्स्, वाराणसी
3. लघुचन्द्रिका – परिमल पब्लिकेशन्स्, वाराणसी
4. विठ्ठलेशीयटिप्पणिः – [Metropolitan Publishing House, Kolkata]
5. न्यायामृतम् – [Metropolitan Publishing House, Kolkata]

# सिद्धान्तरत्नाकर-कौमुदीमूलार्थविद्योतिनीदृष्ट्या 'व्यवस्था'पदवृत्तिविचारः

**श्री ओम शर्मा**
व्याकरणाध्यापकः
केन्द्रियसंस्कृतविश्वविद्यालयः
रघुनाथकीर्त्तिपरिसरः, देवप्रयागः (उत्तराखण्डः)

**सिद्धान्तरत्नाकरस्य परिचयः**- तत्वबोधिनीवदयमपि वैयाकरणसिद्धान्तकौमुद्याः टीकाग्रन्थो वर्त्तते। अस्य प्रणयनं पं. श्रीरामकृष्णभट्टेन सप्तदशशताब्द्याः पूर्वार्धे कृतम्। अद्यत्वे अयं ग्रन्थः स्वरवैदिकीं विहाय सम्पूर्णोपलभ्यते। अस्य ग्रन्थस्य सम्पादनं प्रो.आजादमिश्रेण कृतम्। राष्ट्रियसंस्कृतसंस्थाने ग्रन्थोऽयमुपलभ्यते।

**कौमुदीमूलार्थविद्योतिन्याः परिचयः**- अस्याः टीकायाः प्रणेता मैथिलविद्वान् महावैयाकरणो पं.दीनबन्धुझा वर्त्तते। अस्यास्सम्पादकः विद्यावाचस्पतिः 'डॉ.शशिनाथझा' अस्ति। ग्रन्थोऽयं 1986 तमेख्रीष्टाब्दे कामेश्वरसिंहदरभङ्गासंस्कृतविश्वविद्यालयतः प्रकाशितोऽस्ति। अयं ग्रन्थः अपूर्णः प्राप्यते। सञ्ज्ञाप्रकरणात् कारकान्तभाग एवोपलभ्यते। तत्रापि अजन्तपुँल्लिङ्गे जरसशब्दात् स्त्रीप्रत्ययपर्यन्तः मध्यभागो नैव प्राप्यते। फक्किकाप्रकाशवदयं ग्रन्थो वर्त्तते।

सर्वादयः पञ्चत्रिंशत् सन्ति इति सुविदितमेव। तेषु सर्वादिषु सप्तशब्दानां ''पूर्वपरावरदक्षिणोत्तरपराधराणि व्यवस्थायामसञ्ज्ञायाम्'' इति गणसूत्रेण सर्वासु विभक्तिषु सर्वनामसञ्ज्ञा भवति। किन्तु गणसूत्रात् सर्वत्र प्राप्ता या सञ्ज्ञा सा जसि परतः ''पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायाम् असञ्ज्ञायाम्'' इति पाणिनिसूत्रेण विकल्प्यते। किन्त्वेषा सर्वनामसञ्ज्ञा असञ्ज्ञायाम् अर्थात् सञ्ज्ञाभिन्ने व्यवस्थायां भवति। तदा जिज्ञासा समुदेति यत् व्यवस्था का? इति जिज्ञासामाधृत्य इदं शोधपत्रं परिवर्धते।

**स्वाभिधेयापेक्षावधिनियमो व्यवस्था। व्यवस्थायां किम्? दक्षिणा गाथकाः। इति सन्दर्भे रत्नाकरदृष्टिः**-

स्वस्य पूर्वादिशब्दस्य अभिधेयेन वाच्यत्वेन अपेक्ष्यमाणोऽवधेर्नियमो व्यवस्था

पदार्थः। अत्र 'अपेक्षः' इति शब्दःकर्मणि घञन्त। 'दिशः सपत्नी भव दक्षिणस्याः' इत्यत्र दक्षिणशब्दः व्यवस्थायां वर्त्तते। तथा अस्यां व्याख्यायां भाष्यकैयटमतमपि प्रदर्श्य 'स्वार्थविशिष्टार्थान्तरोपसंक्रम एवोपसर्जनः' इति दीक्षितमतं वण्डितम् दक्षिणा गाथका इत्यत्र दक्षिणाशब्दःप्रावीण्यवाची वर्त्तते।

**स्वाभिधेयापेक्षावधिनियमो व्यवस्था। व्यवस्थायां किम्? दक्षिणा गाथकाः। इति सन्दर्भे विद्योतिनीदृष्टिः-**

स्वाभिधेयापेक्षावधिनियमो व्यवस्था। व्यवस्थायां किम्? दक्षिणा गाथका इत्यस्य समास-विग्रहं निरूप्य वाक्यार्थो वर्णितः। ततः नागेशमतं निरूप्य 'स्वार्थज्ञानप्रयोज्य-वध्याकाङ्क्षा-नियमे सति पूर्वादेर्जसि सर्वनामताविकल्प इति वाच्यार्थः' इत्थं सूत्रार्थःप्रतिपादितः। ततश्च 'दक्षिणा गाथका' इत्यत्र दक्षिणशब्दो निपुणार्थकः, अतः अवध्याकाङ्क्षाभावात् सर्वनामता नास्तीति निरूप्य निपुणशब्दः अवधिसापेक्षमस्ति न वा इति विचार्य पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायाम् असञ्ज्ञायाम्" इति सूत्रस्य प्रत्युदाहरणम् उत्तरे प्रत्युत्तरे च प्रवृत्त इति मन्तव्यम्। तथा च विद्योतिन्यां प्रत्युदाहरणे 'अधरे नवनीटिकानुरागः.....इति श्लोकमपठत्। अन्तिमानुच्छेदे विद्योतिन्यां प्रौढमनोरमोक्तः कथं तर्हि तथा परेषां युधि च" इति कालिदासः,अपरे प्रत्यवतिष्ठन्ते" इत्यादि विषयः समासादितः।

**स्वाभिधेयापेक्षावधिनियमो व्यवस्था। व्यवस्थायां किम्? दक्षिणा गाथकाः। इति इति सन्दर्भे उभयोष्टीकयोः साम्यवैषम्यप्रदर्शनं युक्तायुक्तसमीक्षणञ्च-**

वृत्तिकाराःपठन्ति यत्- ''स्वाभिधेयापेक्षावधिनियमो व्यवस्था"। दीक्षितेनापि इदं वृत्तिवाक्यम् अनुस्यूततया स्वकौमुदीग्रन्थेऽप्यासादितम्। किन्तु वाक्यार्थज्ञाने पदार्थज्ञानं कारणं भवति इति भवन्तः जानन्त्येव, अतःपदार्थज्ञानाय प्रकृतवाक्ये समासादिविचारः क्रियते इदानीम् -

**समासविचारः**- स्वस्य अभिधेयः स्वाभिधेयः (षष्ठीसमासः)स्वाभिधेयेन अपेक्षः इति स्वाभिधेयापेक्षः (अत्र कर्मणि घञ् प्रत्ययः)(तृतीयासमासः)। स्वाभिधेयापेक्षः च असौ अवधिश्च इति स्वाभिधेयापेक्षावधिः (समानाधिकरणः तत्पुरुषः (कर्मधारयः)।

स्वाभिधेयापेक्षावधेर्नियमः इति स्वाभिधेयापेक्षावधिनियमः, इत्थमत्र समासप्रकारः। अत एव नागेशो लिवतिस्वाभिधेयापेक्षावधीति समस्तपाठः। कतिपयप्राचीनवैयाकरणाः अत्र पदद्वयं पठन्ति-स्वाभिधेयापेक्षया अवधिनियम इति प्रकारेण तन्न समीचीनम्। तथा कृते सति तु स्वाभिधेयापेक्षत्वस्य नियमपदेन साकमनन्वयः स्यादिति दोषः। इदानीं समासनिरूपणानन्तरं ''स्वाभिधेयापेक्षावधिनियमो व्यवस्था''। इति व्यवस्थालक्षणस्य समन्वयःक्रियते. स्वस्य=पूर्वादिशब्दस्य अभिधेयः=वाच्यार्थः अर्थात् पूर्वत्वादिरूपेण प्रतीयमानो दिग्देशकालरूपः, तेन=स्वाभिधेयेन=दिग्देशकालरूपवाच्यार्थेन, अपेक्षः=अपेक्षमाणः योऽवधिः=मर्यादारूपः तस्य नियमः=नैयत्यमेव व्यवस्था उच्यते।

अत्र दीनबन्धुझामहोदयः लिखति यद् उक्तलक्षणे अवध्याकांक्षानियम एव अपेक्षावधिनियमशब्देनोच्यते। उदाहरणं यथा 'काशी पूर्वा' इत्यत्र स्वाभिधेयः=पूर्वत्वरूपः नियतम् अवध्याकाङ्क्षोऽस्ति यत् कस्मात् पूर्वा इति, ''अत्रावधिरस्ति प्रयागात्'' इति, अतः अत्र स्वाभिधेयस्य अवध्याकाङ्क्षत्वात्, ''काशी पूर्वा'' इति वाक्ये व्यवस्था सत्वात्, जसि परतः तस्य विकल्पेन सर्वनामसञ्ज्ञा भवति, अत एव 'पूर्वे पूर्वाः' इति रूपद्वयं सम्पद्यते। तर्हि 'पूर्वपरावरदक्षिणोत्तरापराधराणि' व्यवस्थामसञ्ज्ञायाम्' इति सूत्रस्य निष्कृष्टार्थः इत्थं भवति यत्- स्वार्थज्ञानप्रयोज्यावध्याकाङ्क्षानियमे सति पूर्वादिसप्तशब्दानां जस्विभक्तौ सर्वनामसञ्ज्ञा विकल्पेन भवति। अतः दिश उदाहरणमस्ति-पूर्वस्यां रविरुदेति कालस्योदाहरणं यथा- पूर्वे रावणादयः देशस्योदाहरणमस्ति-काशी पूर्वा इति। व्यवस्थायां किम्? दक्षिणा गाथका अत्र दीक्षितःप्रतिपादयति यत् अत्र दक्षिणशब्दः कुशलवाची वर्त्तते, तर्हि अस्य वाक्यस्य अर्थो भवति. कुशलाः गायकाः। अतोऽत्र दक्षिणाशब्दस्य (दिग्देशकालरूप) अवध्याकाङ्क्षाभावात् सर्वनामसञ्ज्ञा न भवेद् व्यवस्थाया अभावात्। किन्तु अवधिः सर्वदा दिग्देशकालरूपः एव भवतीति नास्ति कश्चन नियमः। अत एव 'दक्षिणा गाथकाः' इत्युक्तेऽपि 'कस्मात् कुशलः' इति अवध्याकाङ्क्षनियमस्य सर्वदा उपस्थितिर्भवति। अतोऽत्रापि व्यवस्थासत्वात् इदं प्रत्युदाहरणं समीचीनं नास्ति। अतः 'उत्तरे प्रत्युत्तरे च प्रवृत्तः' इति प्रत्युदाहरणं देयम्। अतः मैथिलविद्वान् पं० दीनबन्धुझाः कौमुदीमूलार्थविद्योतिन्यां प्रत्युदाहरणे श्लोकं पठति-

**अधरे नववीटिकानुरागो, नवने कज्जलमुज्ज्वलं दुकूलम्।**
**इयदेव हि भूषणं वधूनाम् इतरद् भूषणमङ्गदूषणाय॥**

अत्र रत्नाकरे यद् व्याख्यातं तत्सर्वं प्रौढमनोरमाया अङ्गभूतं वर्त्तते। तथा हि - परेषां युधि च, अपरे प्रत्यवतिष्ठन्ते इत्यादौ देशविशेषवाचिनोः शत्रौ प्रतिवादिनि वर्त्तते अतः लाक्षणिकत्वात् न सर्वनामत्वविघातो भवति। अत एव विद्योतिन्यामपि लिवितम्- परापरशब्दौ च दिग्देशकालवर्त्तिनौ अन्यवाचकौ च। तत्र अन्यवाचकयोः पर-अपरशब्दयोः व्यवस्थात्वमस्त्येव। अन्यत्वं हि व्यवस्थितमेव अन्यथा केवलान्वयित्वे न अव्यावर्त्तकत्वापत्तेः। एतेन शत्रुषु प्रयुक्ताः 'परेषाम्' इत्यादि प्रयोगा व्यख्याताः। तथा हि आत्मीयान्यत्वेन रूपेण शत्रूणां प्रतीतिर्न शत्रुत्वेन इति व्याख्यातम्। इति व्याख्यानानन्तरं रत्नाकरे उपसर्जनविषये नवीनसिद्धान्तःप्रतिपादितोऽस्ति स विषयः विद्योतिन्यां नास्ति। शिवदत्तशर्मा दाधिमथास्तु व्यवस्था-असञ्ज्ञात्वविषये शिष्टप्रयोगा एव प्रमाणमिति अचीकथत्। शोधकर्त्तुः मतेऽपि शिवदत्तशर्मणः मतं सर्वथोचितं वर्त्तते।

**सन्दर्भग्रन्थसूचिः-**


1. लघुसिद्धान्तकौमुदी (1),वरदराजाचार्यः,भीमसेन शास्त्री, द्वितीयम्-2006, भैमीप्रकाशनम् -दिल्ली।
2. अष्टाध्यायीसूत्रपाठः, पाणिनिः,पुष्पादीक्षितः, प्रथमम्-2010, संस्कृतभारती- नई दिल्ली।
3. तर्कसङ्ग्रहः, अन्नम्भट्टः, केदारनाथत्रिपाठी, द्वितीयम्, 1985, मोतीलालबनारसीदासः-दिल्ली।
4. वैयाकरणसिद्धान्तकौमुदी(1), भट्टोजिदीक्षितः, गिरिधरशर्मा, परमेश्वरानन्दशर्मा, एकादशतमम्-2004, मोतीलालबनारसीदासः- दिल्ली।
5. सिद्धान्तरत्नाकरः(1), रामकृष्णभट्टः, आजादमिश्रः, प्रथमम्-1995, साहित्य शिल्पी- लखनऊ।
6. वैयाकरणसिद्धान्तकौमुदी(1), भट्टोजिदीक्षितः, गुरुप्रसादशास्त्री त्रयः, प्रथमम्-2012, चौवम्बा सुरभारती-वाराणसी।

7. वैयाकरणसिद्धान्तकौमुदी(1), भट्टोजिदीक्षितः, गोविन्दाचार्यः, लक्ष्मीशर्मा, प्रथमम्–2016, चौवम्बा सुरभारती–वाराणसी।

8. कौमुदीमूलार्थविद्योतिनी, दीनबन्धुझा, शशिनाथझा, प्रथमम्– 1986, कामेश्वरसिंहदरभङ्गासंस्कृतविश्वविद्यालयः– दरभङ्गा।

9. प्रौढमनोरमा, भट्टोजिदीक्षितः, बालकृष्णशास्त्री, द्वितीयम्–1940, वाणीविलासः– वाराणसी।

# न्यायमतेन वृत्तिनिरूपणम्

**अंशुमान पाठकः**
शोधच्छात्रः, न्यायविभागः
के.सं.वि.वि. रघुनाथकीर्त्तिपरिसरः,
देवप्रयागः (उत्तराखण्डः)

न्यायशास्त्रम् ''आन्वीक्षिकी'' विद्यारूपेण अभिहितं वर्तते। जीवने सर्वत्रैव अस्याः विद्याया उपयोगिता परिदृश्यते। तथा च उक्तम्। -

**प्रदीपः सर्वविद्यानामुपायः सर्वकर्मणाम्।**
**आश्रयः सर्वधर्माणां विद्योद्देशे प्रकीर्तिता।।**
**(न्यायभाष्यम् 1/1/1)**

न्यायदर्शने चत्वारि प्रमाणानि स्वीकृतानि। तानि च-

(1) प्रत्यक्षम् (2) अनुमानम् (3) उपमानम् (4) शब्दः। प्रमा करणम् प्रमाणम्। का प्रमा? यथार्थानुभवः प्रमा। तद्वति तत् प्रकारकः अनुभवः यथार्थः अनुभवः इति उच्यते। अर्थात् प्रमाणेन वस्तुनः यथार्थानुभवः भवति।

- प्रत्यक्षप्रमाणम् इन्द्रियम्।
- अनुमानप्रमाणं व्याप्तिज्ञानम्।
- उपमानप्रमाणं सादृश्यज्ञानम्।

प्रत्यक्षानुमानोपमानप्रमाणानि नामतः निर्दिश्य शब्दप्रमाणविषये वर्णनां करोमि। महर्षिगौतमेन उक्तम्- ''आप्तोपदेशः शब्दः।'' तदनुसारेण प्राचीनपथिनः आप्तोच्चरितं शब्दं प्रमाणरूपेण स्वीकृतवन्तः। नव्यमतानुसारी नैयायिकः विश्वनाथाचार्यः पदज्ञानमेव शब्दप्रमाणम् इति स्वीकृत्य स्वाभिमतम् प्रतिष्ठापितवान्।

**पदज्ञानन्तु करणं द्वारं तत्र पदार्थधीः।**
**शाब्दबोधः फलं तत्र शक्तिधीः सहकारिणी।।**
**न्यायसिद्धान्तमुक्तावली/कारिका-81**

मौनीव्यक्तिः यदा स्वाभिप्रायं लिखित्वा अथवा हस्तादिचेष्टया किञ्चित् प्रकाशयति तदा शब्दोच्चारणव्यतिरेकेण एव शाब्दवोधः उत्पन्नः भवति। यदि केवलम् उच्चारितपदमेव शब्दप्रमाणम् इति उच्यते चेत् तर्हि अत्र कार्यकारणभावस्य हानिः अर्थात् व्यातिरेकव्यभिचारः दोषः भवति। किन्तु यदि पदाज्ञनं शब्दप्रमाणरूपेण स्वीक्रीयते तर्हि दोषस्य परिहारः भवति। शारीरिकचेष्टादेः आदौ पदस्य ज्ञानं भवति ततः यथारीति शाब्दबोधः उत्पन्नः भवति।

पदेन सह पदार्थस्य एकः विशेषसम्बन्धः वर्तते येन निर्दिष्टपदश्रवणादनन्तरमेव एकस्य निर्दिष्टपदार्थस्य स्मरणं भवति। स्मारकपदस्मृतपदार्थयोः उभयोः यः सम्बन्धः वर्तते सैव वृत्तिरिति उच्यते। पदपदार्थयोः वृत्तिसम्बन्धः द्विविधः - शक्तिः लक्षणा चेति।

मीमांसकाः शक्तिः पदार्थान्तरम् इति मन्यन्ते। तदभिमतं निरसनाय, ईश्वरेच्छैव शक्तिरिति नैयायिकाः वदन्ति। अस्मात् पदाद् अयमर्थः वोद्धोव्य अथवा इदं पदम् अमुम् अर्थम् वोधयतु-ईश्वरस्य एतादृशी इच्छैव शक्तिनामिका वृत्तिः भवति। ईश्वरस्य इच्छानुसारेणेव वयं निर्दिष्टपदाद् निर्दिष्टार्थस्य ज्ञानं प्राप्नुमहः। अनादि-कालीनवैदिकसम्प्रदायेन पदस्य अर्थः ईश्वरेच्छया नियन्त्रिता प्राप्यते।

अत्र प्रश्नः जायते-ईश्वरेच्छा यदि निर्दिष्टपदाद् निर्दिष्टपदार्थावबोधस्य कारणं भवति तर्हि कथम् पितृनाम्ना पुत्रविशेषस्य ज्ञानं भवति इति। यतः तत्र पितृनाम्नि ईश्वरेच्छयाः अवकाशः नास्ति। अतः पितानामकरणे किम् प्रमाणम्? तद्विषये नैयायिकः उक्तवान्-आधुनिकसङ्केतोऽपि शक्तिः इति, ''एकादशेऽहनि पिता नाम कुर्याद्'' इति विधिवाक्यम् वर्तते।

परन्तु इतोऽपि संशयः भवति। यस्मिन् स्थले स्वातन्त्र्येण आधुनिकपुरुषकृता संज्ञा यथा- व्याकरणे नदी, वृद्धि इत्यादयः तत्र कथम् शाब्दबोधः सम्भवेत्? तत्र कस्यचित् प्राचीन-नैयायिक-सम्प्रदायस्य मतेन शक्तिभ्रमाद् शाब्दबोधः भवति। परन्तु यः ईश्वरं न स्वीकरोति तस्य कथं शाब्दवोधः भवति? तद्विषये नव्यनैयायिकः उक्तवान्-न तत्र ईश्वरेच्छा, परन्तु निर्दिष्टपदाद् निर्दिष्टार्थावबोधनाय आप्तपुरुषीयशक्तिः तत्र कारणम्।

पदे शक्तिरस्ति तथापि पदश्रवणमात्रेण अर्थबोधः भवति इति न मन्तव्यम्। पदज्ञानात् पदार्थज्ञानाय शक्तिज्ञानमावश्यकम्। शक्तिज्ञानम् तत्र सहकारीकारणम्। यस्य

शक्तिज्ञानमस्ति तस्येव पदश्रवणानन्तरं पदार्थज्ञानं भवति। अधुना प्रश्नो जायते शक्तिज्ञानं कथं सम्भवति। तद्विषये उक्तम्–

**शक्तिग्रहः व्याकरणोपमानकोषाप्तवाक्याद् व्यवहारतश्च।**
**वाक्यस्य शेषाद् विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः॥**
**न्या.सि.मु. शब्दखण्डः**

व्याकरणम्, उपमानम्, कोशः, आप्तवाक्यम्, व्यवहारः, वाक्यशेषः, विवृत्तिः, सिद्धपदसान्निध्यम्–एतैः अष्टकारणैः पदे शक्तिग्रहः भवति।

(1) **व्याकरणम्**– धातुनिपातप्रत्ययानां शक्तिग्रहः व्याकरणाद् भवति। भू-धातोः शक्तिः सत्तायाम्, गम् धातोः शक्तिः गमने, 'च' इति निपातस्य शक्ति समुच्चये, सु, औ, जसादिनां शक्तिः एकत्वादिसंख्यायामस्ति। अतः एतेषाम् शक्तिग्रहः व्याकरणाद्भवति।

(2) **उपमानम्**– उपमानादपि पदे शक्तिग्रहः भवति। ''यथा गौः तथा गवयः'' इति् सादृश्यज्ञानात्मकोपमानप्रमाणेन गोसदृशपशौ गवयपदस्य शक्तिज्ञानं भवति।

(3) **कोशः**– कोशग्रन्थादपि शब्दस्य शक्तिज्ञानं भवति। यथा–अमरः–निर्जरः–देवः–सुरः प्रभृति शब्दैः देवे शक्तिग्रहः भवति।

(4) **आप्तवाक्यम्**– आप्तवाक्यादपि शक्तिज्ञानं भवति यदि आप्तव्यक्तिः वदति– ''कोकिलः पिकपदवाच्यः''। अस्य वाक्यस्य श्रवणाद् अनन्तरम् श्रोतुः पिकशब्देन कोकिले शक्तिज्ञानं भवति।

(5) **व्यवहारः**– व्यवहारादपि पदे शक्तिग्रहः भवति। व्यवहाराद् बालस्य शक्तिज्ञानेच्छावतः शक्तिज्ञानं भवति। यदा कोऽपि प्रयोजकः वृद्धः वदति–''घटमानय'', तदा तत् श्रुत्वा प्रयोज्यः वृद्धः घटं नयति। सन्निकटस्थः बालकः एतत् सर्वम् अर्थात् प्रयोजकवृद्धस्य वाक्योच्चारणं प्रयोज्यवृद्धस्य घटानयनादिकं दृष्ट्वा अनुमिनोति–घटानयनं यत् कार्य तत् ''घटमानय'' वाक्यस्य फलमासीत्। ततश्च घटं नय गामानयेत्यादिवाक्याद् आवापोद्वपाभ्यां घटादिपदानां घटादौ शक्तिं गृह्णाति।

(6) **वाक्यशेषः** – वाक्यशेषेन अपि शक्तिज्ञानं भवति। यथा– यवशब्दे

शक्तिज्ञानम्। शास्त्रे उक्तमासीत्– **''यवमयः चरुः भवति।''** यवपदस्य कोऽर्थ? आर्याणां मतेन दीर्घशूकविशिष्टधान्यमेव यवपदेन अभिधीयते। परन्तु पामरमतानुसारेन यव पदेन कङ्गुनामकं धान्यं बोध्यते। अतः अत्र स्वाभाविकतया प्रश्नः जायते यवशब्दस्य शक्तिः कुत्रास्ति? दीर्घशूकविशिष्टधान्ये उत कङ्गुनामकधान्ये? अस्मिन् स्थले सन्देहनिवारणाय शास्त्रवाक्यमासीत् येन दीर्घशूकविशिष्टे धान्यविशेषे एव यवशब्दस्य शक्तिः ज्ञायते–

**यत्रान्या औषधयो म्लायन्ते अथैते मोदमानास्तिष्ठन्ति।**

**वसन्ते सर्वशस्यानां जायते पत्रशातनम् तदा।**
**मोदमानाश्च तिष्ठन्ति यवाः कणिशशालिनः।। इति।।**

(7) **विवृत्तिः**– विवृत्या अथवा विवरणेन शक्तिग्रहः भवति। यथा– देवदत्तः पाचकः। अत्र पाचकः पदास्पार्थ यदि कोऽपि न जानाति, तर्हि तत्र पाकं करोति इति पदान्तरेण अर्थगमनं भवति। पदान्तरेण तदर्थकथनमेव विवरणमित्युच्यते।

(8) **सिद्धपदसान्निध्यम्**– सिद्धपदसान्निध्ये सति अर्थात् प्रसिद्धपदसान्निध्ये सति सन्निहितशब्दस्य शक्तिग्रहः भवति। यः पिकशब्दस्य अर्थ न जानाति परन्तु सहकारतरौ कोकिलः एव मधुरं रौति इति जानाति, सः यदि 'इह सहकारतरौ मधुरं रौति पिकः' इति वाक्यं श्रुणोति तर्हि तत्र सहकारतरौ, मधुरं, रौति इत्यादिनां प्रसिद्धपदानां सान्निध्यवशाद् एव तेन अवगम्यते यत् पिकः एव कोकिलः इति। एवं प्रकारेण प्रसिद्धपदसान्निध्येन पिकपदस्य कोकिले शक्तिग्रहः भवति।

—◆—

# व्यञ्जनायाः अनास्थाविषयकन्यायमतानां समीक्षणम्

यशवन्तकुमारत्रिवेदी
शोधच्छात्रः, जे.एन.यू.
नई दिल्ली।

भारतीयदर्शने शाब्दबोधस्याऽत्यन्तमेव विस्तरः विस्तारश्च दृश्यते, तत्र चार्वाकजैन–बौद्धवैशेषिकातिरिक्तैः सर्वैरपि दार्शनिकैः शाब्दस्यापि प्रमात्वमङ्गीक्रियते, किन्तु तैरपि शाब्दबोधं अन्यरूपेणाऽभ्युपगम्य साक्षात् शाब्दबोधः इति शब्देन व्यवहारः न कृतः। पदज्ञानाधीनवृत्या उपस्थितपदार्थयोः यदन्वयावगाहि बोधः सः एव शाब्दबोधः भवति। किन्तु सर्वस्मादेव शब्दात् न हि सर्वेषां जनानां बोधः, अपि तु कैश्चिदेव शब्दात् यस्य कस्य बोधो जायते, अर्थात् यस्य पदस्य पूर्वं यस्याऽर्थे वृत्तिज्ञानं जातं तत्पदश्रवणे सत्येव तदर्थविषयकशाब्दबोधो भवति। वृत्तिरर्थात् शाब्दबोधौपयिकपदपदार्थयोः सम्बन्धः शाब्दबोधे न प्रधानकारणमपि तु पदार्थोपस्थितिरेव, फलाऽव्यवहितस्यैव प्रधानकारणत्वं, वृत्तिज्ञानस्य तु सहकारीकारणत्वमिति।

वृत्तेः स्वरूपलक्षणं गदाधरभट्टाचार्यैः शक्तिवादे प्रतिपादितं यत् अर्थनिरूपिता सति पदनिष्ठा वृत्तिः, शक्तिलक्षणाभेदेन द्विविधा इति। शक्तिलक्षणयोः स्वरूपविषये तु तान्त्रिकानां प्रायशः परस्परं समानः विचारः दृश्यते, किन्तु व्यञ्जनायाः अस्तित्वविषये परस्परं मतभेदः।

तत्र आलङ्कारिकाः वृत्तिविषये अभिधालक्षणातिरिक्तव्यञ्जनाया अप्यस्तित्वमभ्युपेत्य, तत्स्वरूपं विवेचयन्ति यत् यस्य पदार्थस्य बोधनार्थं लक्षणायाः प्रयोगः क्रियते तस्यार्थस्य प्रतीतिस्तु अन्यशब्देन न भवति, तादृशफलबोधकः व्यापारः व्यञ्जनातिरिक्ता न भवति इति। व्यञ्जकत्वस्य भेदद्वयमस्ति शब्दव्यञ्जकत्वमर्थव्यञ्जकत्वञ्चेति, शब्दव्यञ्जकत्वस्यापि अभिधामूला लक्षणामूला भेदेन भेदद्वयं। तादृशव्यंग्यबोधः अभिधा व्यापारेण लक्षणाव्यापारेण वा न सम्भवति, अतः व्यञ्जनायाः अस्तित्वमभ्युपेयते, तेन काव्यस्य आत्मरूपेण व्यञ्जना तिष्ठति। आनंदवर्धनाचार्याः वदन्ति यत् काव्यस्य आत्मा एव भवति यो अर्थः सहृदयेन श्लाघ्यो, वाच्य एवं प्रतीयमान भेदेन द्विधा भवति। प्रतीयमानं यदस्ति तदेव ध्वनिः तदेव महाकविनां वाणीषु विद्यते यत् प्रसिद्धार्थातिरिक्तमेव भवति यथा अंगनासु

लावण्यं हस्ताद्यवायवातिरिक्तमेव विभाति इति।

लक्षणयाऽपि तादृश बोधो न सम्भवति, यतोहि अत्र अन्वयाऽनुपपत्तिः नास्ति, न वा तात्पर्यानुपत्तिः यतोहि उच्चारणकर्तुः तात्पर्यं तु केषांचिज्जनानामेव, किन्तु यदा वक्तुः अलक्ष्यचौरेणापि गतोऽस्तमर्कः श्रूयते तदा तु तात्पर्याऽनुपपत्तिः नास्ति, अतः तात्पर्यनुपपत्त्यभावे कथं लक्षणा। शक्त्याऽपि अनियन्त्रितार्थस्य प्रकाशो न भवति, न हि अत्र हर्यादिवत् नानार्थकपदानां समवायः, अन्यथा तत्पदश्रवणे सति सर्वदैव तत्तदर्थानामुपस्थित्यापत्तिः, इत्थम् आलङ्कारिकैः व्यञ्जनायाः स्वरूपं प्रतिपाद्यते।

वृत्तिविषयकविचाराणामवसरे गदाधरैः व्यंजना विद्यते वा न वा इत्यस्मिन्पक्षे न किमपि उक्तं, किन्तु तेनोक्तं यत् अर्थनिरूपिता पदनिष्ठा वृत्तिस्तावत् द्वयमेव संकेतो लक्षणा चेति, तदतिरिक्तवृत्तेः निषेधोऽपि न कृतः। अतः लभ्यते यत् यदि तदतिरिक्तः कोऽपि व्यापारः स्यात्तदा सा वृत्ति अर्थनिरूपिता पदनिष्ठा न भवति, यतोहि अर्थनिरूपिता पदनिष्ठा वृत्तिस्तावत् द्वयमेवेति नियन्त्रितार्थस्य प्रकाशं करोति। शब्दशक्तिप्रकाशिकायां जगदीशैः कथितं यत् शाब्दबोधस्य नियन्त्रितार्थकतया प्रत्यक्षाऽनुमानेरन्तर्भावः न हि कर्तुं शक्यते, अत्र अनुमानेनापि ज्ञातुं शक्यते यथा "शाब्दबोधः प्रत्यक्षादिभिन्नः नियन्त्रितार्थप्रकाशकत्वात् यन्नैवं तन्नैवं अनुमित्यादिवत्" इति। अत्र प्रत्यक्षादिपदस्थाऽदिपदेन अनुमानं ग्राह्यम्। अतः व्यञ्जनायां अर्थनिरूपितपदनिष्ठत्वं नास्ति, अनियन्त्रितार्थ-प्रकाशकत्वात्, यथा एकमेव "गतोऽस्तमर्कः" इति वाक्यश्रवणानन्तरमेव ब्रह्मचारिणः सन्ध्यावन्दनादौ, कृषकाः गृहं प्रति, चौरः स्वचौरकर्मविषये प्रवर्तते, तत्र व्यक्तिनां पूर्वागृहित संस्कारवशात् भिन्नभिन्नविषयकबोधः, अर्थात् भिन्नभिन्न व्यक्तिनां भिन्नभिन्नविषयकबोधमात्रं भवति, किन्तु न हि तद्शाब्दबोधः।

अपि च शाब्दबोधो नाम शब्दाज्जायते बोधः, व्यंजनास्थले शब्दस्तु प्रसिद्धार्थबोधने सर्वथैवाऽसमर्थः वर्तते। अतः शब्दस्य शून्यत्वात् तत्र बोधमात्रं भवति न तु शाब्दबोधः। लक्षणाजन्यबोधे तु शाब्दबोधत्वमुपपद्यते, यतोहि तत्र शब्देन साकं संबद्धार्थस्य बोधः, यतोहि लक्षणायां नियन्त्रणमस्ति यत् मुख्यार्थस्य बाधो भवेद्, मुख्यार्थेन साकं योगः, रूढिप्रयोजनाऽन्यतरकारणाद्वा स्यात् तदा लक्षणायाः प्रसक्तिः, एवं लक्षणास्थले नियन्त्रणमस्ति, अतः लाक्षणिकबोधे शाब्दबोधत्वमायाति।

तत्र साहित्यपरम्परायामपि व्यञ्जनायाः अस्तित्वविषये प्रश्नः साहित्याऽचार्यैरपि उपस्थापितः, यथा सर्वप्रथमं भट्टानायकेन भाव्यभावकत्वमथ च भोज्यभोजकभावनामक व्यापारं स्वीकृत्य व्यञ्जनायाः अमान्यत्वं स्थापितं, वक्रोक्तजीवितकारेण ध्वनिसिद्धान्तस्य खण्डनं कृतं, अथ च महिमभट्टेन न्यायपक्षमवलम्ब्य तस्य खण्डनं कृत्वा, अनुमानेऽन्तर्भूतेति प्रकाशितम्, अर्थात् प्रतीयमानार्थप्रतीतौ अनुमितेः कारणता ध्वनेः अनुमितिरूपत्वञ्च प्रतिपादितमिति। तेन अर्थबोधप्रक्रियायाः तात्त्विकमीमांसानुसारं शब्द एवं अर्थविषये निष्कर्षद्वयमुपस्थापितं, शब्दविषये कथितं यत् शब्दे केवलमेकैव शक्तिः सम्भवति, यतोहि एकाश्रिताऽनेकशक्तिषु परस्परनिरपेक्ष्यत्वं भवति, यथा अग्नेः दाहकत्वं, पाचकत्वं, प्रकाशकत्वं च परस्परनिरपेक्षत्वं भवति। द्वितीयतर्कः उपस्थापितः यत् शब्दस्तु कर्मज्ञानसदृशं क्षणिकमिति, क्षणिकत्वं तु तृतीयक्षणनिष्ठध्वंसप्रतियोगित्वमिति, अर्थात् प्रथमद्वितीयक्षणे तिष्ठति तृतीयक्षणे च विनश्यति। तथाहि प्रथमक्षणे तस्योच्चारणं भवति, द्वितीयक्षणे च अर्थज्ञानं भवति, तृतीयक्षणे च तस्य नाशः, येन अभिधया अर्थबोधानन्तरं शब्दः एव नास्ति, अतः तस्मिन् लक्षणायाः व्यञ्जनायाः च अस्तित्वकल्पनं निर्मूलमस्ति।

अत एव "भ्रम धार्मिक विस्त्रब्धः.." "निशेष...." इत्यादौ यद् अभिधेय विरुद्धः अर्थः भासते, तस्मिन् काले शब्दस्यैव अभावात्। अनेकार्थके स्थले "भद्रात्मनो" इत्यादि पद्यानां तु अनेकार्थापदात् अर्थद्वयमपि पूर्वं अभिधयैव भासते, एकार्थे तु अभिधायाः संकोचस्तु पश्चाद् भवति, अर्थद्वयस्य उपमानोपमेयभावसम्बन्धस्य च प्रतीतिपर्यन्तं शब्दस्य अस्तित्वाभ्युपगमः नोचितः।

अथ च शब्दस्य संस्कारः शब्दात्मकः नास्ति, न वा तेन प्रतीयमानार्थस्य, उभावपि ज्ञानात्मकौ एव। ज्ञानं भिन्नं शब्दश्चान्यः। वस्तुतः लक्षणाऽपि अर्थगतैव व्यापारः, काव्यप्रकाशे कथितमस्ति यत् "लक्षणाऽरोपिता क्रिया" अर्थात् लक्षणा तु अर्थनिष्ठैव यतोहि "लक्षणा शक्यसम्बन्धः" शक्यसम्बन्धस्तु अर्थे विद्यते पदे नास्ति, अतः शब्दे अस्य आरोपः क्रियते।

वस्तुतः शब्दस्तु जडपदार्थः वर्तते। तत्र एकैव शक्तिः सम्भवति, यः एकस्थानात् द्वितीयस्थाने संक्रमते यथा वायुबाणादयः, तदेव अर्थवाचकता भवति, सा शक्तिः अस्माकं मनसि स्थिते शब्दज्ञाने भवति, अस्माकं मानसे एकपक्षे शब्दज्ञानं भवति, द्वितीयपक्षे तु अर्थज्ञानं, परन्तु व्यवहारार्थं शब्दज्ञानार्थज्ञानयोः एकः संस्कारात्मकः

सम्बन्धः स्वीक्रियते। तत्र शब्दज्ञानस्य, अर्थज्ञानस्य, तदुभयवर्ति संस्कारात्मकसम्बन्धाऽन्य-तमस्य च कोऽपि एकः पार्श्वः जागरितः भवति च सर्वमपि पार्श्वं स्वयमेव जागरितं स्यात्, अयमेव शब्दार्थयोः मध्ये अभेदः ऐक्यञ्च च शाब्दिकाः अभ्युपगच्छन्ति। वस्तुतः शब्दे न कोऽपि शक्तिः। अथ च अर्थशक्तिः न हि शब्दे स्वीक्रियते, अतः सोऽनुमानादिवत् काव्येतरतत्वमेव भवति, अन्यथा अनुमानस्याऽपि काव्यांगत्वमापद्यते, येन काव्याऽकाव्ययोः विवेकः दुर्घटः स्यात्।

तृतीयविमर्शे तावत् ध्वनिपद्ये अनुमितिसामग्री प्रदर्शिता। यत्-

"भ्रम धार्मिक....." इत्यस्य अनुमानाकारं यत् "गोदावरीतीरं भीरूभ्रमणाऽयोग्यं, दृप्तसिंहत्वात्, यन्नैवं तन्नैवं यथा प्रमदोद्यानम्"।

अपि च व्यञ्जनायाः अस्तित्वविषये एका अन्या महति समस्या विद्यते, तल्लक्षणं मञ्जूषायामुक्तं यत् "मुख्यार्थबाधनिरपेक्षबोधजनको मुख्यार्थसम्बधाऽसम्बध साधारणः प्रसिद्धाऽप्रसिद्धार्थविषयको वक्त्रादिवैशिष्ट्यज्ञानप्रतिभाद्युद्बुद्धः संस्कारविशेषो व्यंजना इति" लक्षणेऽस्मिन् संस्कारस्य प्रवेशेन यदा नवीनविषयकाऽभिनयं स्यात् तदा रसानुभूतिः न स्यात्। यतोहि तद्विषयकपूर्वानुभूतेरभावात्, अनुभूतिं विना संस्कारः न सम्भवति। एवं संस्काराभावात् व्यंजनायाः प्रसक्तिः नास्ति। अतः रसानुभूतेः अनुपपत्तिः। अथ रसगङ्गाधरे काव्यलक्षणप्रतिपादनाऽवसरे उक्तं यत् "रमणीयार्थप्रतिपादकः शब्दः काव्यमिति"। अत्र काव्यलक्षणघटकरमणीयता च "लोकोत्तराह्लादजनकज्ञानगोचरता" विवक्षिता। रमणीयतालक्षणघटके लोकोत्तरत्वनिरूपणे कथ्यते यत् "आह्लादगत-श्चमत्कारत्वाऽपरपर्यायनुभवसाक्षिको जातिवेशेषः" सा च जातिः संस्कारत्वजातिः भवति। तस्य "कारणं तु तदवच्छिन्ने भावनाविशेषः पुनः पुनरनुसन्धानात्मा" अत्राऽपि लक्षणे भावनाख्यसंस्कारस्य प्रवेशेन पूर्वोक्तदोषस्य प्रसक्तिस्तु तादवस्थ्यमिति। अथ च रसस्य न हि वाच्यतया प्रतीतिः यतोहि मम्मटेनोक्तं यत् "रसस्तु स्वप्नेपि न वाच्यः"। अतः नवीनविषयकरसानुभूतेरपलापतादवस्थ्यम्।

इत्त्थं पूर्वं तस्य शाब्दबोधत्वं निरस्य अनुमानेऽन्तर्भावः क्रियते इति तु दिशामात्रम्। अर्थाद् इतोऽप्यधिक विचारमपेक्षते इति तु दिशामात्रमिति।

सन्दर्भग्रन्थसूचि:-

1. स्वयमेव रूपं लक्षणं यस्य तत् स्वरूपलक्षणम्।

2. संकेतो लक्षणा चार्थे पदवृत्तिः। शक्तिवादः।

3. "यस्य प्रतीतिमाधातुं लक्षणा समुपास्यते फले शब्दैकगम्येत्र व्यञ्जनान्नापरा क्रिया।" काव्यप्रकाशः।

4. "अनेकार्थस्य शब्दस्य वाचकत्वे नियन्त्रिते, संयोगाद्यैरवाच्यार्थधीकृद्व्य-पृतिरञ्जनम्।" काव्यप्रकाशः।

5. "लक्ष्यं न मुख्यं नाप्यत्र बाधो योगः फलेन नो, न प्रयोजनमेतस्मिन् न च शब्दस्खलद्गतिः।" काव्यप्रकाशः।

6. "योर्थो सहृदयश्लाघ्यः काव्यात्मेति व्यवस्थितः, वाच्य प्रतीयमानाख्यौ तस्य भेदावुभौ स्मृतौ।" ध्वन्यालोकः।

7. "प्रतीयमानं पुनरन्यदेव वस्त्वस्ति वाणीषु महाकवीनाम्, यत् तत् प्रसिद्धावयवातिरिक्तं विभाति लावाण्यमिवाङ्गनासु।" ध्वन्यालोकः।

8. "मुख्यार्थबाधे तद्योगे रूढितोऽथ प्रयोजनात, अन्योऽर्थो लक्ष्यते यत् सा लक्षणाऽरोपिता क्रिया।" काव्यप्रकाशः।

9. परमलघुमञ्जूषा, श्रीनागेशभट्टकृता, बड़ौदा संस्कृत महाविद्यालयः, 1961

10. काव्यप्रकाशः, श्रीमम्मटकृतः, सं. रेवाप्रसाद द्विवेदी, का.हि.वि.वि,1981

# न्यायशास्त्रस्य पदवृत्तेः व्याकरणशास्त्रदृशा समीक्षणम्

**श्री हरीश डंगवाल**
शोधच्छात्रः, व्याकरणविभागः
के.सं.वि.वि. श्रीरघुनाथकीर्त्तिपरिसरः,
देवप्रयागः (उत्तराखण्डः)

भारतीयदर्शनेषु न्यायशास्त्रं प्रमुखं स्थानं भजते। भारतीयदर्शनानां पर्यालोचनं कुर्मः चेत् पदार्थानां यथार्थस्वरूपस्य अनुसन्धानकरणमेव न्यायशास्त्रस्य प्रधानं कार्यं। शाब्दबोधविचारणावसरे पदवृत्तेः विचारः आवश्यकः इति पदवृत्तेः विचारः न्यायशास्त्रे समीचीनतया ईक्षणेनैव निरूप्यते। अतः अस्य शास्त्रस्यापरं नाम आन्वीक्षिकीति, यस्य निर्वचनं न्यायभाष्ये उपलभ्यते यथा- **प्रत्यक्षागमाभ्याम् ईक्षितस्य अन्वीक्षा तया प्रवर्तत इत्यान्वीक्षिकी इति।**[1] यत्र शब्दप्रत्यक्षाभ्यां ज्ञातस्य वस्तुनः पुनः पुनः ईक्षणं भवति सैव अन्वीक्षिकी , एतादृशस्य न्यायशास्त्रस्य प्रवर्तकः महर्षिः गौतमः वर्तते। एतद्विषये पद्मपुराणे लिखितम्-

**कणादेन तु सम्प्रोक्तं शास्त्रं वैशेषिकं महत्।**
**गौतमेन तथा न्यायं सांख्यन्तु कपिलेन वै**[2]।।

न्यायवार्तिककारेणापि लिखितम्-

**यदक्षपाद प्रवरो मुनीनां शमाय शास्त्रं जगदो जगाद।**
**कुतार्किकाज्ञाननिवृत्तिहेतोः करिष्यते तस्य मया निबन्धः**[3]।।

एतज्ज्ञानं कथं भवेदिति..? केन प्रकारेण..? को आधारः..? इत्यस्मिन् विषये नैयायिकैः अर्थज्ञानाय चत्वारि प्रमाणानि स्वीकृतानि यत् **प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि।**[4] इति गौतमसूत्रेल्लिखितम्। अत्र पदनिमित्तज्ञानं शब्देन ज्ञायते। अतः शब्दलक्षणविषये तर्कसंग्रहस्य न्यायबोधिनीटीकायां लिखितं यत्-आप्तोच्चरितत्वे सति वाक्यत्वं शब्दस्य लक्षणं, आप्तो नाम यथार्थवक्ता। **प्रयोगहेतुभूतयथार्थज्ञानवत्त्वम् आप्तत्वम्**[5]। शाब्दबोधहेतुभूतपदार्थोपस्थित्यनुकूलः पदपदार्थयोः सम्बन्धो वृत्तिरित्युच्यते।

शब्दोपस्थापितार्थानां परस्परं संसर्गावगाहि विशिष्टः बोधः शाब्दबोधः भवति। वृत्तिः द्विधा– शक्तिर्लक्षणा चेति। नैयायिकाः आमनन्ति यत्–**ईश्वरसङ्केतो नाम ईश्वरेच्छा सैव शक्ति**[6] इति। यथा **अस्मात्पदादयमर्थो बोद्धव्यः इतीश्वरेच्छा शक्तिः**[7], सैव सङ्केतसम्बन्धः इत्यप्युच्यते। शक्तिविषये नव्यप्राचीननैयायिकानां भिन्नं भिन्नं मतं वर्तते, नव्यानां मते तु इच्छैव शक्तिः न तु ईश्वरेच्छा, तत्रेयं युक्तिः–लौकिकाः शब्दा नैवेश्वरकृता इति तत्र शक्तित्वेन ईश्वरेच्छाया नैव समायोजनम् भवति। पुनश्च नूतनपदार्थानां नामकरणे न दृश्यते काऽपि ईश्वरेच्छा। पुनः प्रश्नः उदेति–अपभ्रंशशब्देषु कथं शक्तिग्रहः स्यात्? तत्र ईश्वरेच्छायाः अभावात्। अतः एतेषां आक्षेपाणां निवारणाय नव्यैः इच्छैव शक्तिरिति स्वीक्रियते ईश्वरेच्छा न शक्तिः अपितु प्रयोक्तुः इच्छैव शक्तिरिति।

इच्छैव शक्तिः सङ्केतः सम्बन्धश्चेति यदुक्तं नैयायिकैस्तन्न। संकेतसम्बन्धेन द्वयोः सम्बन्धिनोः पदपदार्थयोः मध्ये आधाराधेयाभावस्याभावात् न इच्छायाः सम्बन्धत्वं सम्भवति। यतोहि सम्बन्धः द्वाभ्यां सम्बन्धिभ्यां भिन्नोऽपि द्वयोः आश्रितः भूत्वा विशेष्यविशेषणभावेन ज्ञानस्य नियामको भवति, इदं इच्छायां न वर्तते। अतः श्रीनागेशभट्टेन प्रतिपादितं **परमलघुमञ्जूषायां**– '**पदपदार्थयोः सम्बन्धान्तरमेव शक्तिर्वाच्यवाचकभावापरपर्याया**'[8] ईश्वरेच्छादिभिन्नसम्बन्धः। वाच्यं पदसंसूच्योऽर्थः, वाचकं तत्संसूचकपदं, न तु वाच्यत्वं बोधविषयत्वरूपं न च वाचकत्वं बोधजनकत्वरूपम्। वाच्यवाचक–भावापरपर्याया नाम–वाच्यवाचकभावरूप–शब्दार्थोभयनिष्ठः अखण्डोपाधिरूपः अन्यः सम्बन्धः भवति। पुनः लिखितं– **तद्ग्राहकञ्चेतरेतराध्यासमूलकं तादात्म्यम्**[9]। अर्थात् तस्याः शक्तेः ग्राहकं परस्परयोर्योऽध्यासः (इतरस्मिन्नितरधर्मावभासः) स एव मूलं ज्ञापकं यस्य तत् तादृशम्,, तादात्म्यम् नाम– शब्दार्थयोः परस्परं अभेदरूपेणावभासनं तादात्म्यमुच्यते। एवं प्रकारेण भेदाभेदेन समानरूपेण नियतो भवति, अभेदस्यारोपितत्वाद् उभयोर्मध्ये नास्ति कोऽपि विरोधः। अस्मिन् विषये पातञ्जलयोगसूत्रभाष्येऽपि उल्लिखितम्– सङ्केतस्तु पदपदार्थयोरितरेतराध्यासरूपः स्मृत्यात्मको योऽयं शब्दः सोऽर्थो योऽर्थो सः शब्द इति।[10] सा शक्तिः साधुशब्दवदपशब्देष्वपि भवति यतोहि अपशब्देन अपि बालकानां पशुपक्षिणामपि अर्थबोधो भवति।

भर्तृहरिणापि उक्तमासीत् –

**शिष्टेभ्य आगमात्सिद्धाः साधवो धर्मसाधनम् ।**
**अर्थप्रत्यायनाभेदे विपरीतास्त्वसाधवः** (वाक्य.1.27)

''वाचकत्वाविशेषेऽपि नियमः पुण्यपापयोः''

अर्थात् शिष्टजनेभ्यः आगमात् च धर्मनियमाः साधुशब्देन क्रियन्ते असाधुशब्दप्रयोगे च विपरीतार्थाः धर्मविरुद्धार्थाः उत्पद्यन्ते। समानेऽपि उभयोः वाचकत्वे तत्र साधुशब्दप्रयोगः पुण्यहेतुरपशब्दस्तु पापहेतुरित्यर्थः। शक्तिग्रहस्तु व्याकरणादितः भवति इति संप्रदायविदः वदन्ति यथा–

**शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद् व्यवहारतश्च।**
**वाक्यस्य शेषाद् विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः।।** [11]

व्याकरणद्वारा शब्दानां धातुप्रकृतिप्रत्ययादीनां शक्तिग्रहो भवति। यथा–भू सत्तायां इत्यनुशासनाद् भूधातोः शक्तिग्रहः भवति। उपमानाद् शक्तिग्रहः यथा–गोनिरूपितगवयनिष्ठसादृश्यसाक्षात्काररूपोपमानेन गवयो गवयपदवाच्य इत्याकारकोपमितिः जायते सैव शक्तिग्रहः।

एवंभूतायाः शक्तेः ग्रहः वैयाकरणमतानुसारं जाति–गुण–क्रिया–यदृच्छादिभ्यः व्यक्तेश्चतुर्भ्यः उपाधिभ्यः साधनीयः। तत्र प्रमाणं भाष्यकारस्य **चतुष्टयी शब्दानां प्रवृत्ति**[12] इति वचनम्।

शक्तिभेदः– सा च शक्तिः त्रिधा रूढिर्यौगिकीयोगरूढिश्चेति। रूढिः–शास्त्रकल्पितावयवार्थमानाभावे समुदायार्थनिरूपितशक्तिः रूढिर्यथा–मणि इत्यत्र शास्त्रकल्पितावयवस्य मणधातोरौणादिके इन् प्रत्यये मणिशब्दः साध्यते। सः अवयवलभ्यशब्दकर्तृरूपार्थस्य स्थाने समुदायार्थत्वेन रत्नविशेषम् अवबोधयति अतः रूढिः।

योगरूढिः– शास्त्रकल्पितावयवार्थान्वितविशेष्यभूतार्थनिरूपिता शक्तिर्योगरूढिर्यथा–पङ्कजं (पङ्के जायते) अत्र शास्त्रकल्पितस्य पङ् जन् ड प्रत्ययस्य योऽर्थस्तदन्वितो यो विशेष्यभूतार्थः पद्मरूपस्तेन निरूपिता शक्तिरत्रेति।

यौगिकी– शास्त्रकल्पितावयवार्थनिरूपिता शक्तिः यौगिकी भवति यथा– 'पाचकः'

इत्यत्र शास्त्रकल्पितावयवार्थः 'पच् ण्वुल् अक' तदर्थनिरूपितशक्तिः पाककर्तरि।

नानार्थकेषु हर्यादिशब्देषु कतमोऽर्थः अभीष्ट इति सन्देहो जायतो तत्र संयोगादिभिर्योग्यार्थे शक्तिः स्वीकरणीया। यथोक्तम्–

संयोगः विप्रयोगश्च ..............इति

लक्षणास्वरूपम् – लक्षणायाः विषये नैयायिका वदन्ति स्वशक्यसम्बन्धः इति। तदुक्तं लक्षणा– शक्यसम्बन्धस्तात्पर्यानुपपत्तितः।

यथा– गङ्गायां घोष इत्यत्र गङ्गापदस्य शक्यार्थस्तु भागीरथखाता-वच्छिन्नजलप्रवाहविशेषः, घोषपदस्य शक्यार्थः अभीरपल्ली। तत्र आभीरपल्याः घोषस्य न स्थितिसम्भवः प्रवहणापत्तेः। तेन न गङ्गापदशक्यार्थस्य घोषपदशक्यार्थेन सह अन्वयोपपत्तिः। अतः तत्र लक्षणाऽश्रयणीया भवति सा तु शक्यसम्बन्ध एव। गङ्गाप्रवाहसम्बन्धीतीरं लक्ष्यार्थः, ततःतीरवृत्तिर्घोषः इति बोधः जायते।

सा द्विविधा– जहत्स्वार्था अजहत्स्वार्था च।

**जहत्स्वार्था**– स्वार्थपरित्यागेनेतरार्थबोधप्रयोजिका लक्षणा जहत्स्वार्था।

यथा– 'गां वाहीकं पाठय' इत्यादौ गोसदृशलक्षणायाम् अपि न गोस्तदन्व-यिपाठनक्रियान्वयित्वम् इदमेव स्थलं 'परार्थे स्वसमर्पणम्' इत्यालङ्कारिकाः वदन्ति।

**अजहत्स्वार्था** (उपादानलक्षणा)– स्वार्थसंवलित (मिश्रित) परार्थबोधयित्री अजहत्स्वार्था। यथा– कुन्तान् प्रवेशय इत्यत्र वक्तुः तात्पर्यं कुन्तधारिपुरुषाणां प्रवेशने वर्तते इति कुन्तकुन्तधारिपुरुषाणां प्रवेशे कर्मतयान्वयः भवति। तत्र कुन्तपदं अजहत्स्वार्थलक्षणया कुन्ततद्धार्युभयबोधकं। इदमेव स्थलं 'स्वसिद्धये पराक्षेपः' इत्यालङ्कारिकाः स्वीकुर्वन्ति।

गौणी– गुणसादृश्यसम्बन्धेन शक्यार्थसम्बन्धस्तस्य प्रतिपादिका गौणी यथा –सिंहो माणवकः। अत्र सिंहे ये ये शौर्यादयः गुणाः विद्यन्ते तत्सदृशाः गुणाः माणवकेऽपि दृश्यन्ते। अतः एतादृशसादृश्याधिकरणत्वरूपसम्बन्धेन माणकस्यार्थबोधो लक्षणयैव भवति।

शुद्धा– तदतिरिक्तसम्बन्धेन शक्यसम्बन्ध्यर्थप्रतिपादिका शुद्धा।

प्रकारान्तरेणापि सा द्विविधा। पुनः सा च लक्षणा तास्थ्यादिनिमित्तिका मंजूषायां लिखितम् -

**तात्स्थात् तथैव ताद्धर्म्यात् तत्सामीप्यात् तथैव च ।**
**तत्साहचर्यात् तादर्थ्याज्ज्ञेया वै लक्षणा बुधैः।। इति।।** [13]

इत्यत्र तात्स्थ्यात् नाम- शक्यार्थे तिष्ठतीति तत्स्थः, तस्य भावस्तात्स्थ्यं तस्मात्, तात्स्थ्यात्। मञ्चा हसन्ति, ग्रामः पलायितः इत्यादयः दृष्टान्ताः। ताद्धर्म्यात्-शक्यार्थस्य धर्म इव धर्मो यस्य सः तद्धर्मस्तस्य भावस्ताद्धर्म्यं तस्मात्, यथा- सिंहो माणवकः, गोर्वाहिकः। तत्सामीप्यात्-शक्यार्थस्य सामीप्यं नैकट्यं। तस्मात्, यथा- गङ्गायां घोषः। तत्साहचर्यात्-शक्यार्थस्य साहचर्यं (सहस्थितिः) तत्साहचर्यं तस्मात् यथा- यष्ठीः प्रवेशय। तादर्थ्याद्-तस्मै इदं तदर्थं तदर्थस्य भावः तादर्थ्यम्, यथा- इन्द्रार्था स्थूणा इन्द्रस्थूणा।

एवं प्रकारेण लक्षणायाः बीजं तात्पर्यानुपपत्तिप्रतिसन्धानमेव, न तु अन्वयानुपपत्तिप्रतिसन्धानम्। यतोहि अन्वयानुपपत्तिं बीजत्वेन स्वीकुर्मश्चेत् 'काकेभ्यो दधि रक्ष्यताम्' इत्यत्र अन्वयानुपपत्तिर्नास्ति, परन्तु वक्तुरिच्छा काकसहितसर्वदध्युपघातकजीवेभ्यः रक्षणम् वर्तते शब्दबोधं प्रति पदवृत्तेः ज्ञानं पदार्थोपस्थितिद्वारा सहकारि वर्तते।

**सन्दर्भग्रन्थसूचिः-**


1. न्यायभाष्यम् (1.1.1)
2. पद्मपुराणम्, उत्तरखण्ड (अध्याय - 263)
3. न्यायवार्तिकम्
4. न्यायदर्शनम् (1.1.3)
5. तर्कसंग्रहः (न्यायबोधिनी-शब्दपरिच्छेदः)
6. तर्कसंग्रहः (न्यायबोधिनी-शब्दपरिच्छेदः)
7. तर्कसंग्रहः (शब्दपरिच्छेदः)

8. परमलघुमञ्जूषा (शक्तिनिरूपणम्)
9. तत्रैव
10. तत्रैव
11. न्यायसिद्धान्तमुक्तावली (शब्दखण्ड:)
12. महाभाष्यम् (पस्पशाह्निकम्)
13. परमलघुमञ्जूषा (लक्षणनिरूपणम्)

# न्यायशास्त्रस्य पदवृत्तेः साहित्यशास्त्रदृशा विवेचनम्

**श्री देवेन्द्र प्रसादः**
शोधच्छात्रः (साहित्यविभागः)
के.सं.वि.वि. रघुनाथकीर्त्तिपरिसरः,
देवप्रयागः (उत्तराखण्डः)

निर्विकारस्य सच्चिदानन्दस्वरूपिणः ब्रह्मणः मायाशक्तिरिव शब्दब्रह्मणः शक्तित्रयमङ्गीक्रियते। अत्र शक्तिर्नाम पदपदार्थयोः सम्बन्धः। यथोच्यतो नैयायिकैः **अस्माच्छब्दादयमर्थ बोधव्य इति ईश्वरसङ्केतः शक्तिः** [1] इति।

शक्तिः कुत्रेति विषयमादायाचार्या वैमत्यं भजन्ते। तत्र केचिच्जातौ शक्तिं मन्यन्तेऽपरे व्यक्तौ, अन्ये तु आकृतौ, केचिच्जातिविशिष्टव्यक्तौ, केचिज्जात्याकृतिव्यक्तिषु, परे जातौ शक्तिर्व्यक्तौ लक्षणेति वदन्ति। सम्प्रदायविदो नैयायिकाः गवादिपदानां जात्याकृतिविशिष्टव्यक्तौ शक्तिं अङ्गीकुर्वन्ति। जातिविशिष्टव्यक्तौ शक्तिं नव्यनैयायिकाः स्वीकुर्वन्ति। केचित्तु गवादिशब्देषु जातिः, संज्ञाशब्देषु डित्थादिषु व्यक्तिः, सास्नादिमच्छब्देषु आकृत्तिरिति त्रितयमपि वाच्यमिति वदन्ति। शाब्दिकमते जात्याकृतिव्यक्तिषु तिसृषु शक्तित्रयं स्वीक्रियते। आकृतावेव शक्तिरिति पातञ्जलाः। जातावेव शक्तिर्व्यक्तिलाभस्त्वाक्षेपेणेति भाट्टाः प्राभाकराश्च। सा च जात्यंशे ज्ञाता व्यक्तयंशे स्वरूपसती प्रत्यायिका इत्यन्ये मीमांसकाः।

धातोस्तु फलावच्छिन्नव्यापारे शक्तिरिति नव्यनैयायिकाः, फले व्यापारे च पृथक शक्तिरिति शाब्दिकाः, फले एव शक्तिरिति मण्डनमिश्राः, व्यापारे शक्तिरिति रत्नकोशकृतः।

साहित्यदृशा शक्तित्रयस्य नामानि–

साहित्यशास्त्रे शक्तिपदं वृत्तिपर्यायतया प्रयुज्यते। अतःआलङ्कारिकाः शक्तिः त्रिधेति उल्लिखन्ति। तस्य वृत्तिः त्रिधा इत्यर्थः।

(1) अभिधा शक्तिः।

(2) लक्षणाशक्तिः।

(3) व्यञ्जनाशक्तिश्च।

आभिः शक्तिभिः यथाक्रमं वाच्यार्थः लक्ष्यार्थः व्यङ्ग्यार्थश्च इत्येतेषां ज्ञानं भवति।

अभिधाशक्तिः– न्यायमते शक्तिश्च पदेन सह पदार्थस्य सम्बन्धः। सा च अस्मात्पदादयमर्थो बोद्धव्य इतीश्वरेच्छारूपा।

**साहित्यदृशा अभिधा–**

शब्दः यदा साक्षात्संकेतितमर्थमभिधत्ते तदा साक्षात्संकेतितार्थस्य प्रतीतिः यया शक्त्या भवति सा शक्तिः अभिधा इत्युच्यते। यथोक्तं मम्मटेन **स मुख्योऽर्थस्तत्र मुख्यो व्यापारोऽस्याभिधोच्यत**[2] इति।

अर्थात् वाचकशब्दस्य अर्थः वाच्यार्थः मुख्यः। यया शक्त्या यस्माद् वाचकशब्दात् वाच्यार्थस्य अवगमः सा शक्तिः अभिधा इत्युच्यते। उच्यते पुनः विश्वनाथेन– **तत्र सङ्केतितार्थस्य बोधनादग्रिमाऽभिधा**[3] इति। संकेतिताः भवन्ति जाति–द्रव्य–गुण–क्रियाः। तदेवोच्यते विश्वनाथेन– **सङ्केतो गृह्यते जातौ गुणद्रव्यक्रियासु च**[4] इति।

वैयाकरणानां मतानुसारं जातिगुणक्रियायदृच्छादिषु व्यक्तेश्चतुर्षु उपाधिषु सङ्केतग्रहः साधनीयः। तद्धि "**चतुष्टयी शब्दानां प्रवृत्तिः**"[5] इति महाभाष्यकाराः। मीमांसकास्तु केवलं जातौ एव सङ्केतं स्वीकुर्वन्ति। मम्मटमते–**सङ्केतितश्चतुर्भेदो जात्यादिः जातिरेव वा इति।**[6]

अनेन वाक्येन मम्मटः वैयाकरणमीमांसकानां मतानुकरणं करोति इति अवगम्यते। नैयायिकमहिमभट्टमतानुसारं **क्रियास्वेका प्रवृत्तिः**[7] इति। मुकुलभट्टमतानुसारं तत्र **मुख्यश्चतुर्भेदः ज्ञेयो जात्यादिभेदतः** [8] इति।

अत्र प्रश्नः समुदेति यत् जात्यादयः के? अत्र उच्यते विश्वनाथेन–जातिर्गोर्पिण्डादिषु गोत्वादिका, गुणविशेषाधानहेतुः सिद्धो वस्तुधर्मः। शुक्लादयो हि गवादिकं सजातीयेभ्यः कृष्णगवादिभ्यो व्यावर्त्तयन्ति। द्रव्यशब्दाः एकव्यक्तिवाचिनो हरिहरडित्थडवित्थादयः।

क्रियाः साध्यरूपाः वस्तुधर्माः पाकादयः। **एषु हि अधिश्रयणप्रभृति अधः श्रयणान्तादिपूर्वापरीभूतो व्यापारकलापः पाकादि- शब्दवाच्यः इति।**[9]

एवं प्रकारेण मुख्यसंकेतितवाच्यार्थस्य अवगमः यया शक्त्या भवति सा शक्तिः अभिधा इति उच्यते। अभिधाशक्त्या बोध्यः अर्थश्च अभिधेयार्थः भवति। यथा– कमलम्, देवेन्द्रः, हरिश्चन्द्रः इत्यादयः।

लक्षणा शक्तिः न्यायमतेन –

**लक्षणा शक्यसम्बन्धस्तात्पर्यानुपपत्तितः**[10]

गङ्गायां घोष इत्यादौ गङ्गापदस्य शक्यार्थे प्रवाहरूपे घोषस्यान्वयानुप-पत्तिस्तात्पर्यानुपपत्तिर्वा यत्र अवगम्यते तत्र लक्षणया तीरस्य बोध इति। सा च शक्यसम्बन्धरूपा। तथाहि–प्रवाहरूपशक्यार्थसम्बन्धस्य तीरे गृहीतत्वात्तीरस्य स्मरणं, ततः शाब्धबोधः।

शब्दस्य शक्तिषु लक्षणाशक्तेः महदस्ति महत्त्वम्। यत्र शब्दस्य साक्षात्संकेतितोऽर्थः बाध्यते, सङ्गतिम् अन्वयं वा न लभते तत्र तेन सम्बन्धितोऽपरोऽर्थः रूढिवशात् प्रयोजनवशाद्वा गृह्यते। एतादृशस्यार्थस्य बोधयित्री शक्तिः लक्षणोच्यते। अयम् अर्थश्च लक्ष्यार्थः भवति, यथोच्यते –

**मुख्यार्थबाधे तद्योगे रूढितोऽथ प्रयोजनात्।**
**अन्योऽर्थो लक्ष्यते यत्सा लक्षणारोपिता क्रिया**[11]।।

**मुख्यार्थबाधे तद्युक्तो ययाऽन्योऽर्थः प्रतीयते ।**
**रूढेः प्रयोजनाद्वासौ लक्षणा शक्तिरर्पिता**[12]।।

अत्र लक्षणायां त्रीणि तत्त्वानि निरपवादम् इष्यन्ते यथा –

1. मुख्यार्थबाधः, वाच्यार्थस्य प्रकरणे असङ्गतिः।
2. रूढिः ( लोकव्यवहारारूढो लक्ष्यार्थप्रयोगः)।
3. प्रयोजनम् ( वक्तुः विशिष्टार्थप्रतिपिपादयिषा वा।

लक्ष्यार्थः शब्दस्य आरोपितार्थः भवति। लक्षणायामुपर्युक्तानां त्रयाणां तत्त्वानां दण्डचक्रन्यायेन मिलितत्वेन हेतुता भवति न तु पृथकतया तृणारणिमणिन्यायेन, उदाहरणं यथा– कर्मणि कुशलः इत्यादौ कुशलशब्दस्य मुख्यार्थोऽस्ति कुशान् लाति इति। अत्र वाच्यार्थस्य प्रकरणे असङ्गतित्वात् मुख्यार्थबाधः भवति।

अतः विवेचकत्वादिगुणसंयोगात् कुशलशब्दस्य रूढ्यर्थः दक्षः इति लक्षणाशक्त्या ज्ञायते। एषा एव रूढिमूला लक्षणा इत्युच्यते। यथा वा गङ्गायां घोषः इत्यत्र गङ्गाशब्दस्य मुख्यार्थोऽस्ति जलप्रवाहविशेषः। तत्र घोषः इति लक्ष्यार्थः ज्ञायते। अत्र शीतत्वपावनत्वं प्रदर्शयितुं गङ्गायां घोषः इति उक्तवान्। तस्माद् एषा प्रयोजनमूला लक्षणा इत्युच्यते। लक्षणायाः भेदाः–लक्षणाशक्तेः अशीतिसंख्यकावान्तरभेदाः विश्वनाथादिपण्डितैः परिकल्पिताः। परन्तु मम्मटस्य **'लक्षणा तेन षड्विधा'**[13] इति कारिकया ज्ञायते तस्य मते लक्षणा षट्प्रकारका इति स्पष्टं भवति।

प्रथमतः लक्षणायाः भेदद्वयं भवति। यथा – शुद्धा, गौणी च। अत्र उपचाररहिता लक्षणा शुद्धा इत्युच्यते, उपचारसहिता च गौणी लक्षणा। एतयोर्मध्ये शुद्धालक्षणा पुनः उपादानलक्षणा लक्षणलक्षणा भेदाभ्यां द्विधा परिकल्प्यते।

**स्वसिद्धये पराक्षेपः परार्थं स्वसमर्पणम्।**
**उपादानं लक्षणं चेत्युक्ता शुद्धैव सा द्विधा।।** [14]

अत्र ज्ञातव्यं यत् वाच्यार्थस्य अन्वयसिद्ध्यर्थं अन्यार्थस्य आक्षेपःयत्र भवति सा उपादानलक्षणा इत्युच्यते। यथा– कुन्ताः प्रविशन्ति इत्यत्र कुन्त शब्दः स्वार्थं परित्यज्य अन्वयसिद्ध्यर्थं कुन्तधारिपुरूषरूपमर्थमाक्षिपति। अतः अत्र उपादानलक्षणा भवति।

इयमजहत्स्वार्था इत्यप्युच्यते। यत्र पुनः अशक्यार्थस्य सिद्धये शब्दः स्ववाच्यार्थं परित्यजति तत्र लक्षणलक्षणा भवति। यथा गङ्गायां घोषः इत्यत्र गङ्गाशब्दः अन्यार्थस्य अन्वयसिद्ध्यर्थं स्वप्रवाहरूपं शक्यार्थं परित्यज्य गङ्गातटरूपमर्थमवबोधयति।

अतःअत्र लक्षणलक्षणा। इयं जहत्स्वार्था इत्युच्यते। उपर्युक्त शुद्धागौणीद्वयं पुनः सारोपासाध्यवसानाभेदाभ्यां द्विधा परिकल्प्यते। तत्र उभयोर्लक्षणं यथा –

**सारोपान्या तु यत्रोक्तौ विषयी विषयस्तथा।**[15]
**विषय्यन्तः कृतेऽन्यस्मिन् सा स्यात् साध्यवसानिका।।** [16]

अर्थात् यत्र विषयी विषयौ शब्दत उच्येते तत्र सारोपा भवति यथा - आयुर्घृतम्। यत्र च विषयिणा अन्यस्य आरोपविषयस्य अन्तर्लीनता भवति तत्र साध्यवसाना, यथा - आयुरेवेदम्। एवं प्रकारेण लक्षणा षड्विधा भवति मम्मटमते।

1. शुद्धा उपादानलक्षणा - कुन्ताः प्रविशन्ति
2. शुद्धा लक्षणलक्षणा - गङ्गायां घोषः
3. शुद्धा सारोपा - आयुर्घृतम्
4. शुद्धा साध्यवसाना - आयुरेवेदम्
5. गौणी सारोपा - गौर्वाहिकः
6. गौणी साध्यवसाना - गौरयम्

व्यञ्जना शक्तिः- नैयायिका हि व्यञ्जनावृत्तिं नैव स्वीकुर्वन्ति तन्मते सा लक्षणया गतार्था।

साहित्यदृशा यथा-

**विरतास्वभिधाद्यासु ययाऽर्थो बोध्यते परः।**
**सा वृत्तिर्व्यञ्जना नाम शब्दस्यार्थादिकस्य च।।**[17]

यस्य प्रतीतिमाधातुं लक्षणा समुपास्यते

**फले शब्दैकगम्येऽत्र व्यञ्जनान्नापरा क्रिया।।**[18]

अर्थात् शब्दबुद्धिकर्मणां विरम्य व्यापारभावः इति नयेन अभिधा लक्षणा तात्पर्याख्याः वृत्तयः यदा स्वं स्वम् अर्थ बोधयित्वा उपक्षीणाः भवन्ति, तदा काऽपि अपरा शक्तिः अन्यम् अर्थ बोधयति सा शक्तिरेव प्रकृतिप्रत्ययादिशब्दस्य अर्थस्य व्यञ्जनध्वननगमन-प्रत्यायनादि व्यपदेशविषया व्यञ्जना इत्युच्यते। लक्षणाश्रयभूतो लाक्षणिकः शब्दः।

लाक्षणिकशब्दे च व्यङ्ग्यार्थबोधको व्यापारो व्यञ्जनात्मकः। गङ्गायां घोष इत्यत्र लाक्षणिकशब्दस्य प्रयोगः शैत्यपावनत्वादिप्रयोजनस्य प्रतीतिमुत्पादयितुं क्रियते। अतो लाक्षणिकशब्दगम्ये तत्प्रयोजने व्यञ्जनाव्यापारो हि मुख्यतमो न त्वनुमानादयः। इदमेव प्रयोजनं व्यञ्जनया गूढागूढव्यङ्ग्यत्वेन प्रतीयते। अतो लक्षणामूला व्यञ्जनाऽनिवार्या।

अस्याः व्यञ्जनाशक्तेः व्यवहारं नर्ममर्मज्ञाः कवयः कुर्वन्ति, इयमेव ध्वन्यर्थप्रतिपादिकाशक्तिः उच्यते। गङ्गायां घोषः इत्यत्र शीतत्त्वपावनत्वरूपादिफलप्राप्तिः व्यञ्जनाशक्त्या भवति इति प्रतिपादयन्ति साहित्याचार्याः।

### सङ्केतसङ्ख्या विवरणिका

1. न्यायसिद्धान्तमुक्तावली, शब्दखण्डः, कारिका–82
2. काव्यप्रकाशःद्वितीयोल्लासः।।8।।
3. साहित्यदर्पणः (द्वितीय परिच्छेदे)।।3।।
4. साहित्यदर्पणः (द्वितीय परिच्छेदे)।।4।।
5. महाभाष्यम् (पस्पशाह्निके)
6. काव्यप्रकाशः(द्वितीयोल्लासे)।।7।।
7. महिम भट्टः(व्यक्तिविवेके)
8. मुकुल भट्टमते
9. साहित्यदर्पणः (द्वितीय परिच्छेदे)।।9।।
10. न्यायसिद्धान्तमुक्तावली
11. काव्यप्रकाशः (द्वितीयोल्लासे)।।9।।
12. साहित्यदर्पणः (द्वितीय परिच्छेदे)।।5।।

13. काव्यप्रकाशः( द्वितीयोल्लासे)।।12।।

14. काव्यप्रकाशः( द्वितीयोल्लासे)।।10।।

15. काव्यप्रकाशः( द्वितीयोल्लासे)।।10।।

16. काव्यप्रकाशः( द्वितीयोल्लासे)।।11।।

17. साहित्यदर्पणः (द्वितीय परिच्छेदे)।।12।।

18. काव्यप्रकाशः( द्वितीयोल्लासे)।।14।।




सङ्गोष्ठीसमापनसत्रे मुख्यातिथयः प्रो०पीयूषकान्तदीक्षितमहोदयाः उद्बोधयन्ति



धन्यवादं ज्ञापयन्ति न्यायविभागाध्यक्षाः डॉ. आर्.बालमुरुगवर्याः



सभायामुपस्थिताः अध्यापकाः छात्राश्च




पत्रवाचकः श्रीअंशुमानः



सङ्गोष्ठीकार्येषु पूर्णतया सहायकः परिसरच्छात्रः दीक्षितजोशी



निरन्तरविचारेण श्रान्तान् सभ्यान् मुरलीवादनेन आनन्दयति परिसरच्छात्रः श्रीउत्तमभट्टः।




न्यायविभागाध्यक्षान् स्मृतिचिह्नं प्रदाय कार्यक्रमान्ते सभाजयन्ति परिसरनिदेशकाः।